मिथो विरोधं संत्यक्त्वा पश्यांग्लाः स्वाभिमानिनः ॥ ३७ ॥
अत्रापि स्मर्यतेऽस्माकमितिहासः पुरातनः ।
येनैक्यं सुविरोधेऽपि स्वीकर्तव्यं समंजसैः ॥ ३८ ॥
[१५] घोषयात्राप्रसंगेन पुरा राजा सुयोधनः ।
गन्धर्वैस्ताडितो बद्धो पराक्रम्य जयेषुभिः ॥ ३९ ॥
श्रुतमेतद्यदा सर्वं पाण्डवैर्वनवासिभिः ।
तदा कृतं न्याय्यमेतदिति भीमेन भाषितम् ॥ ४० ॥
किं तु [१६] राजाजातशत्रुर्विषादमगमत्परम् ।
प्रोत्साहयन्स्वभ्रातॄंश्च रिपूणां दमने तदा ॥ ४१ ॥
युधिष्ठिरस्य तद्वाक्यमवधार्यं सदा नरैः ।
विशेषतो भेदशीलैरस्माभिर्हिन्दवासिभिः ॥ ४२ ॥
"परस्परविरोधेषु वयं पञ्चैव ते शतम् ।
परैः परिभवे प्राप्ते वयं पञ्चाधिकं शतम् ॥ ४३ ॥"
आंग्लवृत्तेषु यत्तत्त्वं तदेवात्र निदर्शितम् ।
सर्वैः संभूय राष्ट्रेषु कर्तव्यं हितमात्मनः ॥ ४४ ॥
अस्मद्देशे बहुविधा धर्माचाराः पुरातनाः ।
तत्राप्यनेकजातीयाः कालमानेन चागताः ॥ ४५ ॥
तथैव विस्तृता भूमिस्तेनैक्यं बहुदुष्करम् ।
तथापि हिन्दवासीया जनाः सर्वेऽपि बान्धवाः ॥ ४६ ॥
कलहो यद्यपि मिथो यदा स्याद्राष्ट्रसंकटम् ।
तदा सर्वैः संघशक्त्या हर्तव्यं तत्प्रयत्नतः ॥ ४७ ॥
महंमदीयाः ख्रिस्ताश्च ये चान्ये हिन्दवासिनः ।
समागच्छन्ति चेत्सर्वे तद्राष्ट्रस्य हितं भवेत् ॥ ४८ ॥
राष्ट्रकार्यार्थमैक्यं हि सर्वेषां सुखदायकम् ।
आंग्लानुकरणे सक्तैः प्रथमं ग्राह्यमेव तत् ॥ ४९ ॥

तथा च निर्भया वृत्तिर्निश्चयो दृढ आत्मनः ।
शौर्यं चातुर्यमेवानुकरणीय हिताय यत् ॥ ५० ॥
एवं समुदितेष्वेषु गुणेष्वस्मासु भारत ।
न चिरादेव राष्ट्रस्य जायेताभ्युदयः पुनः ॥ ५१ ॥

॥ इति श्रीगान्धीगीतायामनुकरणयोगो नाम
अष्टमोऽध्याय. ॥ ८ ॥

---

## अथ नवमोऽध्यायः ।

भारतीय उवाच ।

अत्र येऽप्यांग्लसेवायां नियुक्ता हिन्दवासिन ।
तेषां महान्विरोधोऽयमस्मत्कार्येषु दृश्यते ॥ १ ॥
स्वदेशभक्तिर्हृदये कथं तेषां न वर्तते ।
हितकार्येषु घाताय सर्वथा प्रभवन्ति ते ॥ २ ॥
येन हानिः परास्माकं स्फुटा सर्वत्र दृश्यते ।
तस्यैव राज्ययन्त्रस्य रक्षणाय सदोद्यता ॥ ३ ॥
स्वकीयाना वधे चैषां प्रचलेद्धि करः कथम् ।
मनोभूमिर्विचित्रेयं दासानां यत्प्रतीयते ॥ ४ ॥
अपेक्ष्यते दया यत्र ममत्वं स्वोदितं तथा ।
तत्रैव वैरं काठिन्यं वर्तते इति दुर्धरम् ॥ ५ ॥

महात्मोवाच ।

बहूनामप्यनर्थानामेकमेवात्र कारणम् ।
यत्स्वीकृता बतास्माभिः परसेवा विघातिनी ॥ ६ ॥
अस्यां हि परसेवायामुदारा बहुशो गुणाः ।
नश्यन्ति पश्यतामेव मुग्धं च जगदीदृशम् ॥ ७ ॥

सेवायां बहुमन्वानो मानहानिं न पश्यति ।
स्वस्वामिनो मते तिष्ठंस्तदादेशं करोति च ॥ ८ ॥
सेवा हीनतमा लोके शूद्रकर्मेति कीर्तिता ।
राजपूर्वा च सा तत्र लोकेषु बहु मन्यते ॥ ९ ॥
ब्राह्मणक्षत्रियविशां सेवाधर्मो हि गर्हितः ।
स्पर्धन्ते त्वद्य ते सर्वे राजकर्मसु भारत ॥ १० ॥
स्ववृत्तिस्थाः पुरा सर्वे ब्राह्मणा वेदपारगाः ।
निरीहाश्च स्वतन्त्राश्च बह्वमन्यन्त राजभिः ॥ ११ ॥
तैरेव धनलोभेन दास्य स्वीकृतमीदृशम् ।
त्यक्त्वा लोकधुरीणत्वमपहाय च गौरवम् ॥ १२ ॥
राज्ञः प्रसादमीप्सद्भिस्तत्त्वमेतत्प्रकीर्तितम् ।
लोके राजमतं ग्राह्यं नाविष्णु. पृथिवीपतिः ॥ १३ ॥
तेनोन्मत्तेष्वपि जनो न विरोधपरः क्वचित् ।
राजा प्रभुर्लोकधाता इति मत्वा न निन्द्यते ॥ १४ ॥
परकीयैर्यदा भूमिरियं स्ववशगा कृता ।
तदापीमां पुरस्कृत्य वृत्तिं लोकेन वर्तितम् ॥ १५ ॥
माहात्म्यं राजसेवायाः पश्यैवं वर्धितं क्रमात् ।
इदानीं राष्ट्रकार्येषु तदेवास्मान्प्रबाधते ॥ १६ ॥
वस्तुतो राजशब्दस्य वैयर्थ्यं चांग्लपद्धतौ ।
राज्यस्य शासने राज्ञः स्वातन्त्र्यं नैव विद्यते ॥ १७ ॥
यथा लोकसभा शास्ति नियुक्ता वापि मन्त्रिणः ।
तथैव क्रियते राष्ट्रे निमित्तं राजनाम तु ॥ १८ ॥
अस्मासु राजनिष्ठाया माहात्म्यं तु पुरातनम् ।
येनेदं राज्ययन्त्रं वै राजेति बत पूज्यते ॥ १९ ॥
रक्षकाद्यखिलोकेषु स्वस्वस्थानाभिमानिषु ।

इयं वृत्तिर्विशेषेण दृश्यते कार्यघातिनी ॥ २० ॥
स्वकीयानां निरोधे च तेषां दण्डः सदोद्यतः ।
स्वामिना यत्समादिष्टमविचार्यैव तत्क्रिया ॥ २१ ॥
स्वदेशे च स्वकीयेषु प्रीतिस्तेषामपीष्यते ।
यद्राष्ट्रस्याहित स्पष्टं कार्यं तन्नैव तैरपि ॥ २२ ॥
सेवायां बहवो दोषा बन्धजाः संभवन्ति वै ।
तत्रापि बुद्धिः कल्याणी स्याच्चेद्दुःखाय नो भवेत् ॥ २३ ॥
तावत्सेवा प्रकर्तव्या यावद्राष्ट्राविरोधिनी ।
विरोधे समनुप्राप्ते त्याज्या सैव प्रयत्नतः ॥ २४ ॥
लोकेऽस्मिन्यतमानेन कर्तव्यं स्वात्मनो हितम् ।
तदप्यविगणय्यैव बान्धवेषु समाचरेत् ॥ २५ ॥
कुटुम्बं बान्धवा देशः स्वकीयश्च तथाग्रतः ।
एषा परंपरा धार्या उत्तरोत्तरवाहिनी ॥ २६ ॥
॥ इति श्रीगान्धीगीतायां सेवाधर्मयोगो नाम नवमोऽध्यायः ॥ ९ ॥

---

## अथ दशमोऽध्यायः ।

महात्मोवाच ।

अथेदानीं प्रवक्ष्यामि राष्ट्रधर्मं समुज्ज्वलम् ।
पालनीयः प्रयत्नेन स सर्वैरुदयोन्मुखैः ॥ १ ॥
यत्र तेजोमयं किंचिद्राष्ट्रे संप्रतिदृश्यते ।
सत्यं धर्मस्य तद्बीजं रक्षणीयं प्रयत्नत. ॥ २ ॥
यानि राष्ट्राणि लोकेऽस्मिन्दृश्यन्ते ऋद्धिमन्ति च ।
तत्र मूलं विजानीहि राष्ट्रधर्मस्य पालनम् ॥ ३ ॥

व्यक्तिधर्माज्ज्ञातिधर्मो राष्ट्रधर्मस्ततो महान् ।
माहात्म्यं तारतम्येन जानाति स्वकृतौ सुधीः ॥ ४ ॥
ब्राह्मणक्षत्रियविशः शूद्राश्चैवापि भारत ।
चत्वार एव ते वर्णाः सदा राष्ट्रे सुनिश्चिताः ॥ ५ ॥
चातुर्वर्ण्यमिदं पश्य गुणकर्मविभागशः ।
निश्चीयते सदा सुज्ञैर्जन्म नैवात्र कारणम् ॥ ६ ॥
निरीहा लोककल्याणे स्वयंस्फूर्तिस्तथोज्ज्वला ।
त्यागवृत्तिः श्रेष्ठतमा यत्र तं ब्राह्मणं विदुः ॥ ७ ॥
सत्त्वस्य यत्र चोत्कर्षो निर्भयत्वममानिता ।
भोगेष्वसक्तिः स सदा वन्द्यो ब्राह्मणसत्तमः ॥ ८ ॥
आविर्भावश्च रजसः क्षत्रिये संप्रदृश्यते ।
तत्रापि सत्त्वमूलेयं वृत्तिः सम्यक्प्रतीयते ॥ ९ ॥
प्रतिकारोऽन्यायकृतेर्दण्डः पारुष्यमेव च ।
प्रयुज्यते क्षत्रियेण तदेवास्य विशेषणम् ॥ १० ॥
दीयते यत्प्रमाणेन तदाधिक्येन गृह्यते ।
वैश्यवृत्तिरियं पश्य लोके स्याद्व्यावहारिकी ॥ ११ ॥
तेन राष्ट्रे हि वस्तूनां क्रयो विक्रय एव च ।
उत्पादनं चापि तथा वणिग्भिः क्रियते सदा ॥ १२ ॥
नैकोऽपि यत्र चैतेषां गुणोत्कर्षः प्रतीयते ।
सेवापरः स कार्येषु शूद्रः श्रेष्ठैर्नियुज्यते ॥ १३ ॥
सत्त्वस्य च प्रकर्षेण शूद्रो ब्राह्मणतामियात् ।
हीनवृत्तिप्रसंगेन ब्राह्मणस्याप्यधोगतिः ॥ १४ ॥
चातुर्वर्ण्यमिदं सिद्धं भारते जन्मतः पुरा ।
वृत्तिर्न लक्षणोपेता संकरस्तेन दुर्गमः ॥ १५ ॥
परदास्यवशादद्य बहवः शूद्रतां गताः ।

तथापि वर्णमाहात्म्यं गीयते चोपयुज्यते ॥ १६ ॥
वर्णाचारो यदा लोके भक्त्यासीत्पालितः पुरा ।
तदा परंपरायत्तः स सर्वैः शिरसा कृतः ॥ १७ ॥
पित्रोपदिष्टो धर्मो हि पश्चात्पुत्रेण पाल्यते ।
नियमातिक्रमो येन नासीदृष्टः कदाचन ॥ १८ ॥
सा कालवशतो भ्रष्टा व्यवस्था लौकिकी क्रमात् ।
आचारे संकरस्तेन विचारेऽपि तथैव च ॥ १९ ॥
तेन स्ववर्णमाहात्म्य स्खलितं नियमादिह ।
उच्चा नीचपदं प्राप्ता. कस्तान्संमानयिष्यति ॥ २० ॥
दुराग्रहोऽयमेतेषां स्वाचारो यैर्न पालितः ।
तैर्वर्णवर्णन लोके हास्यतां याति सर्वथा ॥ २१ ॥
तत्रापि मुद्रणकला विद्याविस्तारसाधिनी ।
आगता भारते तेन ज्ञान सुलभतां गतम् ॥ २२ ॥
वर्तन्ते बहवो भेदा लोके देशान्तरेष्वपि ।
तथापि जन्मतो वर्णसिद्धिरत्रैव भारते ॥ २३ ॥
पुरातनोऽयमाचारो धर्मे विहित इत्यपि ।
रूढिप्राबल्यमेवेह मन्यते बहुधा जनैः ॥ २४ ॥
कालमानेन चाचारः सर्वथा शिथिलीकृतः ।
नवीनैः शिक्षितैस्तत्र विचारोऽपि नवो वृतः ॥ २५ ॥
स्वकीयभावना तेन नाशिता नैव वर्धिता ।
भेदे च कलहे चैतत्कारणं समुपस्थितम् ॥ २६ ॥
कोटिशश्चान्त्यजातीया अस्पृश्या इति धिक्कृताः ।
असस्कृता बान्धवास्ते निमग्ना हीनकर्मसु ॥ २७ ॥
सेवमानैर्विधर्म्याणां स्पर्शमाहारमेव च ।
स्वकीया अपसार्यन्ते धिगेषा भारते स्थितिः ॥ २८ ॥

राष्ट्रधर्मे तु भेदानामवकाशो न विद्यते ।
यद्यद्भेदाय दुःखाय तद्वर्तव्यं प्रयत्नतः ॥ २९ ॥
समाना बान्धवाः सर्वे जन्मभूमिनिवासिनः ।
सामान्यधर्मो यस्तेषां स राष्ट्रे प्रथमः स्मृतः ॥ ३० ॥
व्यक्तिधर्मेऽपि सहसा यन्न राष्ट्रहितावहम् ।
तत्त्याज्यं मनसा सम्यग्विचार्य मनुजेन च ॥ ३१ ॥
शान्तिः समृद्धिः स्वीयेषु राष्ट्रे स्याद्येन मङ्गलम् ।
तदेव व्यक्तिस्वातन्त्र्यं मनुजाना सुखं वहेत् ॥ ३२ ॥
तस्मात्सर्वैर्नाशयित्वा भेदं साध्यं दुरासदम् ।
सुखं राष्ट्रस्य यत्नेन तद्धर्मस्य महत्फलम् ॥ ३३ ॥
उपेक्षा नैव कर्तव्या राष्ट्रे शत्रोरणोरपि ।
नो चेत्स प्रबलो भूत्वा कालेन व्यथयेज्जनान् ॥ ३४ ॥
यः स्वार्थवशगो भूत्वा शत्रुपक्षं परामृशेत् ।
स सर्वैरपि हन्तव्यः शत्रुणा सह यत्नतः ॥ ३५ ॥
प्रत्यहं चिन्तयित्वैव उपायान्राष्ट्रवर्धनान् ।
सर्वैः संभूय कर्तव्यः सदोद्योगस्तया दिशा ॥ ३६ ॥
अत्रापि लोकनेतारः सुबुद्धाः कार्यतत्पराः ।
न कैश्चिदवमन्तव्या मान्याः सर्वैः सदोद्यतैः ॥ ३७ ॥
लोकाग्रणीषु ये नाम स्वार्थमुद्दिश्य केवलम् ।
यतन्ते तेऽाचरादेव हास्यता यान्ति सर्वतः ॥ ३८ ॥
विस्मृतं येन सर्वं स्वं लोककार्यरतेन हि ।
ममत्वं यस्य वै राष्ट्रे स सर्वैरपि पूज्यते ॥ ३९ ॥
स आचार्यो राष्ट्रधर्मे उपदेष्टा सुखस्य च ।
अनुसृत्य हित लोकः श्रेयसा प्रतिपद्यते ॥ ४० ॥
संघशक्तिर्हितकरी राष्ट्रे सैव सदेष्यते ।

सर्वेषां यत्र चैक्यं स्यात्तत्कार्यं पश्य सिध्यति ॥ ४१ ॥
भेदः कलहकारी च घाताय सहसा नृणाम् ।
प्रयत्नेनापहर्तव्यः स स्वकीयेषु नेतृभिः ॥ ४२ ॥
आचारे च विचारे च स्वकीयानां हितं सदा ।
यः साधयेद्यथाशक्त्या स राष्ट्रीय इति स्मृतः ॥ ४३ ॥
परदास्यावसक्तानां लोकानां राष्ट्रभावना ।
यदि जागर्त्यविरता सुलभं स्यात्ततो हितम् ॥ ४४ ॥
ये नाम राज्यकर्तारः परकीयाः समागताः ।
सर्वथा प्रतिकार्यास्ते लोकैः स्वातन्त्र्यचिन्तकैः ॥ ४५ ॥
तत्र पीडा बहुविधा कारागृहनिबन्धनम् ।
मरणं यतमानानामापतेद्राजदण्डतः ॥ ४६ ॥
तथापि न प्रविचलेन्निश्चयाद्धर्मतो नरः ।
धर्मे धैर्यं धृतवतां कार्यमुन्नतिकारकम् ॥ ४७ ॥
एष ते सारतः प्रोक्तो राष्ट्रधर्मः सनातनः ।
पावनः सर्वलोकानां पालनीयः सदा नृभिः ॥ ४८ ॥
इमं धर्ममुपाश्रित्य राष्ट्रैरन्यैरपि स्वकम् ।
साधितं पश्य कल्याण नोपकुर्यात्कथ स नः ॥ ४९ ॥
गृहभूषणभूताभिरबलाभिरपीह नः ।
महत्कार्यं च कर्तव्यं राष्ट्रधर्मानुपालने ॥ ५० ॥
यथार्थदर्शिनी लोके पुरुषस्य प्रियः सुहृत् ।
अबला बलदात्री सा जीवने सुखकारिणी ॥ ५१ ॥
बाल्ये माता पालयति भगिनी च प्रिये स्थिता ।
सर्वसौख्यं ददातीह यौवने सहचारिणी ॥ ५२ ॥
स्त्रियो नेष्यन्ति पुरुषान्स्त्रियो राष्ट्रस्य दीप्तयः ।
राष्ट्रधर्मस्य माहात्म्यं स्त्रियः सवर्धयन्ति हि ॥ ५३ ॥

प्रेम्णा मृदुवचोभिश्च नरस्तासां वशोऽनुगः ।
कार्यः सत्पथगामी स ताभिरेवाचिरादिह ॥ ५४ ॥
मुमुक्षवो वयं सर्वे कठिनाद्दास्यबन्धनात् ।
स्वातन्त्र्यं च स्वराज्यं च धर्मेणानेन चाप्नुमः ॥ ५५ ॥

॥ इति श्रीगान्धीगीतायां राष्ट्रधर्मयोगो नाम दशमोऽध्यायः ॥ १०

---

## अथ एकादशोऽध्याय ।

भारतीय उवाच ।

स्वराज्यमिति किंरूपं तन्नो वक्तुमिहार्हसि ।
विस्तरेण वयं ज्ञातुमिच्छामस्तत्त्वमस्य हि ॥ १ ॥

महात्मोवाच ।

साङ्गोपाङ्गं करिष्यामि स्वराज्यस्य विवेचनम् ।
येन संशयलेशोऽपि न विद्येत हृदि क्वचित् ॥ २ ॥
आदावांग्लाः पराक्रम्य वाणिज्यार्थमिहागताः ।
अस्मासु कलहं दृष्ट्वा मतिं राज्ये प्रचक्रिरे ॥ ३ ॥
स्वकीयं शासनं चात्र युक्त्या शक्येत भेदतः ।
एवं विचार्य ते दक्षाः कलहे पक्षपातिनः ॥ ४ ॥
वाणिज्यरक्षणार्थं वै सैनिका ये नियोजिताः ।
तेषामेव सहाय्येन आक्रान्तं पश्य भारतम् ॥ ५ ॥
युद्धकौशलमेतेषां तथा शस्त्रादिकं नवम् ।
बहुसख्या भारतीया येन युद्धे पराजिताः ॥ ६ ॥
एक साह्यं प्रकुर्वन्तो नाशयित्वा हि वैरिणम् ।
पश्चान्मित्रमपि घ्नन्ति नीतिरेषां बतेदृशी ॥ ७ ॥
यैश्च कालवशात्सर्वमाक्रान्तं भारत परैः ।

तानेव बहु मन्वाना वयं तु सुखिनः स्थिताः ॥ ८ ॥
एतेषां शासनं पश्य बाह्यतः सुखद परम् ।
अन्तःक्लेशकर नृणां सर्वस्वापहरं महत् ॥ ९ ॥
स्वार्थसिद्धिसमुद्योगो लोके स्वाभाविकः किल ।
परार्थं त्वविरुध्यैव कृतः श्रेष्ठः स उच्यते ॥ १० ॥
यत्र वै परघातेन स्वार्थः सिध्यत्यभीप्सितः ।
सा हि हीनतमा रीतिर्निन्द्यते बहुधा जनैः ॥ ११ ॥
आंग्लैस्तु नीतिमेवैतामालम्ब्य यतित बलात् ।
येनाचिरात्समाधान नष्ट राष्ट्रे शुभोदयम् ॥ १२ ॥
ये शासने नियुक्तास्तु तेष्वेवासन्हि केचन ।
उदारा भारतीयानामुद्धारे ये कृतोद्यमाः ॥ १३ ॥
ईदृशो राजपुरुषो ह्यूमनामा महाशयः ।
यतमानो दयाशीलो हितार्थे हिन्दवासिनाम् ॥ १४ ॥
तेनैव मिलिता देशे शिक्षिताश्च सदुद्यमे ।
भारतीयाः प्रयत्नेन समितिर्निर्मिता शुभा ॥ १५ ॥
यत्र वै बहुदेशीयाः समेता लोकनायकाः ।
पश्यन्ति त्रिविधोपायान्यैः स्याद्राष्ट्रहितं किल ॥ १६ ॥
सभाविताः प्रथमतः कौतुकाद्राज्यकर्तृभिः ।
उत्तेजिता मानिताश्च सदस्या आदरात्तदा ॥ १७ ॥
यदा तु समितौ लोकैर्दूषिता राज्यपद्धतिः ।
तदा हेयतया सापि गणिता राजपूरुषैः ॥ १८ ॥
दया सहानुभूतिश्च लुप्ता चैव क्रमेण ह ।
यदांग्लशासने दोषा दृष्टाः समितिनायकैः ॥ १९ ॥
राज्याधिकारे बहव आंग्ला आसन्नियोजिताः ।
येषां वेतनमुद्दिश्य व्यय आसीन्महत्तमः ॥ २० ॥

वाणिज्यं च स्वकीयानां पोषितं राज्यकारिभिः ।
कर्शिता हिन्दपुत्राश्च स्वोद्यमे दुर्बलाः कृताः ॥ २१ ॥
एवं दैन्यं समुद्भूतं राष्ट्रे सर्वत्र शाश्वतम् ।
तत्रोपायांश्चिन्तयन्ति धुरीणा लोकनायकाः ॥ २२ ॥
निर्धना भारतीया वै परायत्तं च शासनम् ।
शस्त्रहीनं शौर्यहीनं राष्ट्रं क्लिश्यति सर्वथा ॥ २३ ॥
अस्माभिरेवमानीता आपद्राष्ट्रविघातिनी ।
तन्नाशाय प्रयत्नेन वर्तितव्यं सदा जनैः ॥ २४ ॥
आंग्लशासनमुद्दिश्य यो विश्वासो महानभूत् ।
स इदानीं समुद्भूतो दृष्ट्वा दैन्य समन्ततः ॥ २५ ॥
अत्रान्तरे समुदितो विवेकानन्दनामकः ।
महात्मा वङ्गदेशीयो राष्ट्रोद्धारप्रवर्तकः ॥ २६ ॥
स्वय सन्यस्तसर्वस्वस्तेजस्वी चांशुमानिव ।
ऐक्यभावं स्वाभिमानं स्वकीयेषु प्रसारयन् ॥ २७ ॥
येन देशान्तरं गत्वा स्थापितं सुमहद्यशः ।
कीर्तितं धर्ममाहात्म्यमखिलेषु सनातनम् ॥ २८ ॥
अज्ञानेनावृता लोका भारते बहुशः किल ।
तेनैतैः स्वहितोद्योगः क्रियते न कदाचन ॥ २९ ॥
ये सूज्ञा लोकनेतारस्तेऽपि स्वार्थपरायणाः ।
राष्ट्रस्याप्यहितं कृत्वा साधयन्ति स्वकं सुखम् ॥ ३० ॥
एषा ह्यवनतिर्लोके महती क्लेशकारिणी ।
तस्या नाशे समुद्योगः कृतस्तेन महात्मना ॥ ३१ ॥
तस्य यत्नेन लोकेषु चैक्यं राष्ट्रीयभावना ।
धर्मप्रीतिर्जागरिता ओजो वर्धयतीह या ॥ ३२ ॥
वङ्गीया युवकाः सर्वे विवेकानन्दमाश्रिताः ।

तेजस्वितां सदाचारं चाप्नुवन्हितसाधकम् ॥ ३३ ॥
राष्ट्रीयसमितिश्चापि कुर्वती लोकजागृतिम् ।
राज्यकर्तॄन्समुद्दिश्य प्रयत्नानकरोद्बहून् ॥ ३४ ॥
भारतीयहिते त्वांग्लहानिरित्यपि निश्चितम् ।
मत्वाधिकारिणस्तत्र विरोध कुर्वते बहु ॥ ३५ ॥
" कृषिप्रधाने देशेऽस्मिञ्जनाः सर्वेऽप्यशिक्षिताः ।
लभन्ते शान्तिमतुलां समृद्धे चांग्लशासने ॥ ३६ ॥
तानन्यथा भासयन्तः केचित्स्वमतमानिनः ।
असुखं वर्तते लोके इति मिथ्या वदन्ति ते ॥ ३७ ॥
विश्वासो नैव कर्तव्यस्तेषां वाक्ये कदाचन ।
सर्वथा च विरोद्धव्याः स्वसिद्धा लोकनायकाः " ॥ ३८ ॥
इत्थं समितिनेतारः शासनस्थैर्लघूकृताः ।
नैवामुञ्चन्स्वयत्नांस्ते लोककार्यैकतत्पराः ॥ ३९ ॥
केचिदाग्ला उदाराश्च तेषामासन्सहाय्यकाः ।
यैः स्वदेश्येषु चलिता भारतीयकथा तदा ॥ ४० ॥
राष्ट्रस्य शासने तेन सूज्ञा भारतवासिनः ।
केचिन्नियोजिताश्चाग्लसभया हितकारिणः ॥ ४१ ॥
ये राजपुरुषा राष्ट्रे नियुक्ता लोकशासने ।
तेषां मन्त्रोपदेशाय निर्मितौ समितिस्तथा ॥ ४२ ॥
एव क्रमेण कुर्वाणा लोककल्याणवादिनः ।
तृप्तिं दातु न शक्तास्ते लोकस्यांग्लाः कथंचन ॥ ४३ ॥
राज्याधिकारो हि महान्यावदाग्लेषु योजितः ।
का लोकसमितिस्तावद्यस्या जल्पो न मन्यते ॥ ४४ ॥
अत्रान्तरे भारतेषु 'कर्झण' सनियोजितः ।
अवमत्य जनान्वङ्गभङ्ग स कृतवांस्तदा ॥ ४५ ॥

लोकानुरञ्जन राजकर्तव्यमिति घोषणा ।
महिष्या या कृता राष्ट्रे सा तेन विफलीकृता ॥ ४६ ॥
वङ्गीयाश्चैकदेशीया बलादेव द्विधा कृताः ।
अन्यायस्यापकर्तुं ते सर्वेऽपि व्यदधुर्मतिम् ॥ ४७ ॥
समस्तं भारत वर्षं प्रतिकारे समुद्यतम् ।
अशस्त्राणां हि ये मार्गास्ते सर्वैश्च समाश्रिताः ॥ ४८ ॥
तत्र केचित्समुद्भूतास्तामसाः क्रान्तिकारकाः ।
यैरांग्लानां वधेनैव स्वातन्त्र्यं समभीप्सितम् ॥ ४९ ॥
असंतोषो महान् राष्ट्रे कर्षणस्यानयात्कृतः ।
बहवो लोकनेतारः कारागारे नियन्त्रिताः ॥ ५० ॥
तथापि संप्रचलिता लोके जागृतिरीदृशी ।
न निरुद्धा हठात्सा तु बभूवाथ समुत्कटा ॥ ५१ ॥
भारतीयेष्वपि तदा स्फुटा वाचः समीरिताः ।
मास्त्वस्मासु चिरं हीदं क्लेशदं दुष्टशासनम् ॥ ५२ ॥
आंग्लदेशेऽपि सा वार्ता प्रसृता क्षोभशंसिनी ।
निःसारितश्च स्वस्थानात्कर्षणो लोककर्षणः ॥ ५३ ॥
तदानीमेव लोकेषु स्वराज्यावाहनं कृतम् ।
समितौ[21] राष्ट्रभक्ताना दादाभाईमहात्मना ॥ ५४ ॥
स्वतन्त्रं च समृद्ध च सर्वलोकसुखावहम् ।
स्वकीयानां हि यद्राज्यं तत्स्वराज्यं प्रचक्षते ॥ ५५ ॥
विदेशीयबहिष्कारं व्रत च परमोज्ज्वलम् ।
स्वराज्यप्राप्त्युपायोऽयं तदानीमेव निश्चितः ॥ ५६ ॥
एव सद्व्रतमुद्दिश्य कार्यं लोकस्य शिक्षणम् ।
निर्भया येन लोकाः स्यु स्वहिते कृतबुद्धयः ॥ ५७ ॥
स्वराज्यं यद्भविष्यत्तत्किंरूपं समभीप्सितम् ।

आंग्लानामेव साम्राज्ये जनः स्याद्वा सुखी न वा ॥ ५८ ॥
स्वायत्तं हिन्दराष्ट्र स्याददविरोधेन तत्त्वतः ।
येनांग्लैः सहवर्तित्त्व स्नेहभावेन सिध्यति ॥ ५९ ॥
एवंविधायां चर्चायां विवादः समजायत ।
येन लोकधुरीणेषु मतभेदोऽप्यदृश्यत ॥ ६० ॥
प्रतस्वीकरणे चापि समुत्साहो न तादृशः ।
भेदस्तेन समुद्भूतो राष्ट्रीयेष्वेव दुर्धरः ॥ ६१ ॥
आंग्लानां कृपया ह्येव राष्ट्रकल्याणमीप्सितम् ।
भविष्यतीति निश्चित्य विरोधस्तैर्न सौख्यदः ॥ ६२ ॥
मतमेतत्समादृत्य आंग्लप्रीतिमभीप्सवः ।
यतन्ते विविधोपायैः केचिदाग्लाविरोधिनः ॥ ६३ ॥
विरुद्धमविरुद्ध च केषांचिद्द्विविध मतम् ।
यत्र कार्यं न कृपया विरोधस्तत्र कार्यकृत् ॥ ६४ ॥
अन्ये विरक्तांश्चांग्लेषु स्वोद्धारे कृतबुद्धयः ।
स्वयमेव यतन्तेऽत्र लोके जागृतिकारिणः ॥ ६५ ॥
या चांग्लसस्कृतिरिति प्रथिता जडमानिनी ।
आंग्लानां सहवासेन सापि राष्ट्रे प्रवेशिता ॥ ६६ ॥
आधिभौतिकसौख्यानां विचारे व्यापृतो जनः ।
दैविकात्मिकशक्तीनां विचारं नैव कुर्वते ॥ ६७ ॥
देहेन्द्रियसुखायैव मनोबुद्धिविवञ्चना ।
येनात्मिकं समाधानं नष्टप्राय हितावहम् ॥ ६८ ॥
अशाश्वती सुखावाप्तिर्जनस्तत्रैव मोहितः ।
नष्टा मन शान्तिरपि ह्यशान्तस्य कुतः सुखम् ॥ ६९ ॥
असंतोषः श्रियो मूलं श्रीः प्रसूते सुखांस्ततः ।
संपाद्या सापि यत्नेन श्रियां कीर्तिश्चिरंतनी ॥ ७० ॥

एवं नानाकामवशस्तथा लोभसमाकुलः ।
असमाहितवृत्तिश्च दृश्यते रुषितो जनः ॥ ७१ ॥
बाह्योपाधिनिरालम्बि हृदयस्थं निरन्तरम् ।
सुलभं सत्सुखं लोकाः समीहन्ते न केचन ॥ ७२ ॥
विशेषतो ये देशेऽस्मिन्नांग्लसंस्कृतिमण्डिताः ।
तेषां वृत्तिरियं नित्यमसमाधानवर्धिनी ॥ ७३ ॥
यदांग्लराष्ट्रं लोकेषु प्रथितं विभवादिमत् ।
तत्रापि लोकसंतोषो नष्टप्रायो हि सर्वदा ॥ ७४ ॥
श्रीमन्तोऽप्यल्पसंख्यास्ते बाधन्ते स्वाश्रिताञ्जनान् ।
समृद्धः कलहो येन राष्ट्रे संप्रति दृश्यते ॥ ७५ ॥
लोकनेतार इति ये लोकेषु विचरन्त्युत ।
ते कीर्तिलोलुपाः सर्वेऽप्यन्तः स्वार्थपरायणाः ॥ ७६ ॥
ये राष्ट्रशासने लोकसभया वै नियोजिताः ।
तेऽपि लोकस्य संतोषमशक्ताः साधितुं परम् ॥ ७७ ॥
ये धनावाप्तये चांग्लाः पृथग्देशान्तरं गताः ।
वसन्ति सुखिनस्तत्र देशेष्वेव पृथक्पृथक् ॥ ७८ ॥
तैः स्वतन्त्रतया तत्र स्थापितं लोकशासनम् ।
मानितं चांग्लसभया स्वकीयमिति तद्बहु ॥ ७९ ॥
न भारतीयेषु तथा मार्दवं दृश्यते क्वचित् ।
दास्यबन्धगताः सर्वेऽप्यांग्लानामनयादिह ॥ ८० ॥
स्वसमुन्नतये लोका यतन्ते चेत्त्व कुत्रचित् ।
घातस्तेषां निश्चितः स्याद्राजशासनमीदृशम् ॥ ८१ ॥
कृता नवीना नियमा धुरीणानां नियन्त्रणे ।
भाषणे लेखने तेषां निर्बन्धाश्चापि निर्मिताः ॥ ८२ ॥
[२५]सभास्थाने समाहूता नागराश्च सहस्रशः ।

पशुमारं मारितास्ते सशस्त्रै राजसैनिकैः ॥ ८३ ॥
एवं बहुविधां पीडां सहन्ते भारते जनाः ।
सोऽयं हि निकषग्रावा स्वराज्यस्य समुज्ज्वलः ॥ ८४ ॥
सहते विविधान्क्लेशान्स्वयत्नं नैव मुञ्चति ।
स भारतीयः पूजार्हो ह्यस्मिन्कार्ये प्रकीर्तितः ॥ ८५ ॥
भवेयुरीदृशाः सर्वे स्वातन्त्र्याप्तौ सुनिश्चिताः ।
हेतुमेतं समुद्दिश्य कुर्याल्लोकस्य शिक्षणम् ॥ ८६ ॥
ऐक्यं सर्वत्र राष्ट्रस्य निर्भया निश्चिता मतिः ।
त्यागबुद्धिश्च सर्वस्वे साधनानीह भारत ॥ ८७ ॥
एवं साधनसंपन्नाः सर्वे भारतवासिनः ।
स्वराज्यमचिरात्प्राप्य मोदिष्यन्तीह भूतले ॥ ८८ ॥
स्वदेशे सौख्यमतुल परराष्ट्रेषु मान्यता ।
स्वराज्यफलमेतच्च अमृतं स्वादु स्वादत ॥ ८९ ॥
ईश्वरस्य प्रसादेन सर्वमेतद्भविष्यति ।
हृत्स्थः स सर्वभूतानां शान्तये मङ्गलाय च ॥ ९० ॥

॥ इति श्रीगान्धीगीतायां स्वराज्ययोगो नामैकादशोऽध्यायः ॥ ११ ॥

---

## अथ द्वादशोऽध्यायः ।

भारतीय उवाच ।

यद्राष्ट्रस्य हितार्थाय करणीयमिहोच्यते ।
तत्रेश्वरस्य माहात्म्य वर्तते वद वा न वा ॥ १ ॥
राष्ट्रेऽत्र विविधा धर्मा आचाराश्च पृथक्पृथक् ।
सर्वत्रेश्वरभावश्च एकरूपः कथ भवेत ॥ २ ॥
कथमल्ला हि रामेण ख्रिस्तेन वद संयुजेत् ।

कल्पना विविधास्तत्र विरोधिन्योऽपि कुत्रचित् ॥ ३ ॥

महात्मोवाच ।

महंमदीयाः ख्रैस्ताश्च पारसीकास्तथैव च ।
सर्वेष्वीश्वरभावश्च यथास्मासु तथैव सः ॥ ४ ॥
नामतो भेद एवेह अल्ला राम इतीरितः ।
आस्तिक्येन तु सर्वत्र ईश्वरः पूज्यते सदा ॥ ५ ॥
ईश्वरः करुणामूर्तिर्भक्तवात्सल्यपूरितः ।
जगतः स्थितिसंहारौ सृष्टिं चापि करोति सः ॥ ६ ॥
स एव सर्वभूतानां हृद्देशे पश्य तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ ७ ॥
नीतितत्त्वं यथा धर्मे सर्वत्र सममेव हि ।
तथैवेश्वर भावश्चाप्यास्ति केषु समः किल ॥ ८ ॥
मूर्तिमत्त्वं च वैविध्यमस्मद्धर्मे विशेषतः ।
तथापि मूलतस्तत्त्वं नान्यैः किंचिद्विरुध्यते ॥ ९ ॥
अधीता भगवद्गीता कुराणं वापि भक्तितः ।
बैबलं चापि ख्रिस्तानां समुन्नयति वै मनः ॥ १० ॥
ईश्वरे महती श्रद्धा मनोवृत्तिश्च सात्त्विकी ।
उत्पद्यते धर्मवशात्सर्वे धर्माः समा इह ॥ ११ ॥
तस्मादेव स्वके धर्मे रतिः श्रेष्ठा प्रशस्यते ।
आदरः परधर्मेऽपि आचारे विविधे तथा ॥ १२ ॥
ईश्वरप्रेरितं कार्यं तत्प्रीत्यै स्वीकृतं जने ।
निमित्तमात्रं कर्ता च नरस्तेनैव योजितः ॥ १३ ॥
तस्येशस्यैव कारुण्यात्कार्यं सिद्धिमवाप्स्यति ।
इति या सुदृढा भक्तिः सा सर्वेषां सुसंमता ॥ १४ ॥
प्रत्यहं प्रातरुत्थाय परमेशस्य चिन्तनम् ।

पूजनं प्रणिपातश्च विहितः सर्वधर्मिभिः ॥ १५ ॥
मनःप्रसादः सौम्यत्वं शौचमात्मविनिग्रहम् ।
प्रसादात्परमेशस्य प्राप्नुवन्ति नरा इह ॥ १६ ॥
प्रागेव राष्ट्रधर्मस्य मया विवरणं कृतम् ।
यत्र वै सर्वधर्माणां समावेशो भविष्यति ॥ १७ ॥
राष्ट्रधर्माविरोधेन स्वधर्मस्यानुपालनम् ।
अधिष्ठानं चेश्वरस्य लोकार्थे विहितं शुभम् ॥ १८ ॥
ये चापि नास्तिका राष्ट्रे वर्तन्ते कार्यकारिणः ।
बुद्धिभेदो न तैः कार्यो जनानामीशवादिनाम् ॥ १९ ॥
ईश्वरे भक्तिरचला लोककल्याणकारिणी ।
तत्र भेदे कृते लोकेऽप्यनवस्था भवेत्खलु ॥ २० ॥
तस्मादेवं विचिन्त्यैव लोकसंग्रहकारिणा ।
वर्तितव्यं विवेकेन यत्स्याद्राष्ट्रहितावहम् ॥ २१ ॥
स्वधर्माचरणेनापि राष्ट्रकार्यं न दुष्करम् ।
परधर्मासहिष्णुत्वं तत्त्याज्यं सर्वथा जनैः ॥ २२ ॥
स्वभावनासमुद्दिष्टमीश्वरं भजते नरः ।
स तया श्रद्धयोपेतश्चित्तशान्तिमवाप्नुते ॥ २३ ॥
मिथो द्रोहेण वै हानिरसुखं चैव शाश्वतम् ।
अद्रोहेण सुखं शान्तिः प्रीतिर्लोके जनिष्यति ॥ २४ ॥
तस्मात्सदा श्रद्दधान ईश्वरे च समाहितः ।
स्वस्य चैव परेषां च करिष्यति महद्धितम् ॥ २५ ॥

॥ इति श्रीगान्धीगीतायामीश्वराधिष्ठानयोगो नाम
द्वादशोऽध्याय. ॥ १२ ॥

---

## अथ त्रयोदशोऽध्यायः ।

महात्मोवाच ।

लोकसंग्रहमुद्दिश्य राष्ट्रकल्याणमीप्सुना ।
वर्तितव्यं सदा राष्ट्रे विचार्यैव यथार्थतः ॥ १ ॥
विश्वसंस्तस्य सद्बुद्धौ मानयन्कृतिमप्युत ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २ ॥
सामान्यतो हि लोकेऽस्मिन्संमतैव परंपरा ।
तामनादृत्य बहुधा लोको नैव प्रवर्तते ॥ ३ ॥
लोकाग्रणीर्यस्य पिता सोऽपि लोकेषु मान्यताम् ।
अयत्नेनैव लभते हेतुस्तत्र परंपरा ॥ ४ ॥
स कृतिं यदि पूर्वेषां सर्वत्रैवमनुस्मरन् ।
लोकरञ्जनशीलः स्याल्लोकमान्यो भवेद् ध्रुवम् ॥ ५ ॥
यदा तु पूर्वमाहात्म्यममत्वैव जने नरः ।
स्वैरवृत्तिर्भवेल्लोके सोऽचिराद्याति तुच्छताम् ॥ ६ ॥
स्वसुखं नैव गणयेत्तस्माल्लोकहिते रतः ।
यतेताप्यनिशं कार्ये एष वै लोकसंग्रहः ॥ ७ ॥
न द्रव्यस्यार्जनं हेतुर्नापि स्वसुखलालसा ।
निरपेक्षस्तु यो नित्यं स कुर्याल्लोकसंग्रहम् ॥ ८ ॥
केचित्कीर्तिं समुद्दिश्य वर्तन्ते लोककारणे ।
सर्वथा संमतास्माकं नैषा वृत्तिस्तु भारत ॥ ९ ॥
लोककल्याणकर्तॄणां कीर्तिर्हि सहजं फलम् ।
प्रयत्नस्तु विशेषेण कस्मात्तत्रैव दृश्यते ॥ १० ॥
अल्पस्यापि स्वकार्यस्य वृत्तपत्रेषु घोषणा ।
अन्यैश्च विविधोपायैः कीर्तिप्राप्तिस्तथेष्यते ॥ ११ ॥
अयत्नेनैव संप्राप्तमचिरादेव नश्यति ।

कृतिहीनस्य कीर्तिश्च तथा लोके विलुप्यति ॥ १२ ॥
लोकोपकारकरणे स्वसंतोषोऽपि सिध्यति ।
लोकस्य हि सुखं दृष्ट्वा श्रेष्ठो मनसि मोदते ॥ १३ ॥
बहूनि लोककार्याणि कर्तव्यानीह भारते ।
नानाक्लेशसमापन्नो यत्र वै दृश्यते जनः ॥ १४ ॥
अज्ञानं दुर्बलत्वं च दारिद्र्यं चापि सर्वतः ।
कलहाय प्रवृत्तिश्च स्वल्पादपि च कारणात् ॥ १५ ॥
यस्त्वेता आपदो यत्नाद् दूरीकर्तुं समीहते ।
तथा चोद्यमशीलः स्यात्स वै लोके महीयते ॥ १६ ॥
कलहेनैव राष्ट्रस्य हानिः सर्वत्र दृश्यते ।
अनायासेनेतरेषां लाभस्तत्रैव सिध्यति ॥ १७ ॥
धुरीणेन प्रणाशाय कलहस्यैव मूलतः ।
प्रयत्नः सततं कार्यो येन लोकहितं भवेत् ॥ १८ ॥
अप्रवृत्तिः क्वचित्कार्ये भीत्या स्वार्थवशादपि ।
लोककल्याणमुद्दिश्य धृत्या तत्कार्यमेव तु ॥ १९ ॥
नेता एव यदा स्वार्थबुद्धिर्भीत्येव वर्तते ।
तदा लोका भवन्तीह स्वकर्तव्यपराङ्मुखाः ॥ २० ॥
इमं भावं समुद्दिश्य गीतासु प्रोक्तवान्हरिः ।
स्वकर्तव्यविमूढाय पार्थाय समुपादिशत् ॥ २१ ॥
क्षात्रवृत्तिरियं लोके युद्धे चाप्यपलायनम् ।
प्रमुखैः पालनीया हि लोकसंग्रहकारणात् ॥ २२ ॥
ये तु दम्भमुपाश्रित्य वञ्चयन्ति जनानिह ।
अन्ते ते हास्यतां यान्ति सर्वैरपि लघूकृताः ॥ २३ ॥
लोकान्प्रकाशयन्तीह स्वेन सत्त्वबलेन ये ।
तेषामेव विभूतित्वं लोकैः संप्रतिपूज्यते ॥ २४ ॥

गीतैः स्तुवन्ति वन्दन्ते सर्वे भक्त्या यथेश्वरम् ।
तस्मात्सत्त्वं समाश्रित्य लोकसंग्रहमाचरेत् ॥ २५ ॥
एकोऽपि दुर्गुणो लोके कीर्तिं नाशयतीह वै ।
विचारमथ चाचारं नेतॄणां वीक्षते जनः ॥ २६ ॥
स्वीकर्तव्यं नरेणेदं व्रतं कष्टतरं महत् ।
स्वार्थं ममत्वं त्यक्त्वेह लोककल्याणकारणात् ॥ २७ ॥
एवंगुणविशिष्टं तं महात्मानं जना अपि ।
विभूतिमत्त्वं श्रेष्ठयं तेऽप्यर्पयन्ति समाहिताः ॥ २८ ॥

॥ इति श्रीगान्धीगीतायां लोकसंग्रहयोगो नाम त्रयोदशोऽध्यायः ॥१

---

## अथ चतुर्दशोऽध्यायः ।

भारतीय उवाच ।

विभूतिमत्त्वे सहज ईशतेजोंशसंभवः ।
विस्तरेण वदस्वैतद्विषये पुनरेव हि ॥ १ ॥
हतभाग्ये हि राष्ट्रेऽस्मिन्का बाभूवन्विभूतयः ।
यासां सततयत्नेन लोका उपकृताः भृशम् ॥ २ ॥

महात्मोवाच ।

पुरास्मिन्भारते वर्षे ऋद्धिमत्सु दिनेषु वै ।
सर्वत्र स्म प्रदृश्यन्ते तेजस्विन्यो विभूतयः ॥ ३ ॥
राजकार्यधुरीणाश्च लोककल्याणकारिणः ।
सुशीलाश्चैव विद्वांसः कुशला युद्धकर्मणि ॥ ४ ॥
वेदवेदाङ्गतत्त्वज्ञा नानाशास्त्रेषु पारगाः ।
मान्या महान्तो बहव येषां कीर्तिर्धरातले ॥ ५ ॥
चतुःषष्टिकलाभिज्ञा वाणिज्येऽपि कृतश्रमाः ।

इत्येतद्भारतीयानां माहात्म्यं चोपवर्णितम् ॥ ६ ॥
इदानीं पारतन्त्र्येण राष्ट्रे त्वस्मिन्नियन्त्रिते ।
लुप्ता तेजस्विता लोको दीनश्च तमसावृतः ॥ ७ ॥
धर्मे निष्ठा च शुचिता तथा सा स्वाभिमानिता ।
नष्टप्राया कालवशान्नष्टा राष्ट्रेषु मान्यता ॥ ८ ॥
शूराश्च कृतविद्याश्च सर्वे स्मृतिपथं गताः ।
शास्त्रज्ञा नैव दृश्यन्ते नैव युद्धस्य कारणम् ॥ ९ ॥
अशस्त्राः सर्वतो लोकाः कारिताः क्लीबवद् भुवि ।
शस्त्रस्य दर्शनेनैव भीरेषां कम्प एव च ॥ १० ॥
यत्र वै पारतन्त्र्यस्य प्रभावो दुरतिक्रमः ।
ऋद्धिः क्षीणा भवेत्तत्र क्रमेणैवेति मे मतिः ॥ ११ ॥
स्थैर्ये स्वातन्त्र्यकाले तु लोकाः शास्त्रकलास्विह ।
नैपुण्यं प्रान्पुवन्त्येते स्वतस्तत्र कृतोद्यमाः ॥ १२ ॥
तस्मादादौ लोकसुखं स्वतन्त्रं कर्तुमुद्यताः ।
उदासीनाश्च स्वसुखे पश्यात्रत्या विभूतयः ॥ १३ ॥
प्रतिकूलेऽपि कालेऽस्मिन्भारतीया विभूतयः ।
राष्ट्रोन्नतिं समुद्दिश्य वर्तन्ते यत्नमास्थिताः ॥ १४ ॥
वाङ्मये कृतधीरेको रवीन्द्रेण[२६] समः पुमान् ।
तथैव जगदीशो[२७]ऽपि सृष्टिशास्त्रे प्रकाशते ॥ १५ ॥
एवमद्यापि दृश्यन्ते विद्वांसो भारते क्वचित् ।
बहुशश्च कृतोत्साहा नेतारो राजकारणे ॥ १६ ॥
येनोपायेन लोकानां क्लेशो वै पारतन्त्र्यजः ।
नश्येत सर्वथा त तेऽप्युपायं चिन्तयन्ति वै ॥ १७ ॥
सा चित्ते सततं चिन्ता वाचा तत्रैव चोद्यमः ।
शरीरेणापि कार्यस्य गतिस्तत्रैव दिश्यते ॥ १८ ॥

एवं बहुविधा धीरा यावज्जीवं कृतश्रमाः ।
लोकैरद्यापि पूज्यन्ते केचित्स्मृतिपथं गताः ॥ १९ ॥
सम्यक्प्रयत्नैरेतेषां यदा राष्ट्रे सुखं भवेत् ।
तदा विभूतिरेता वै पूजयेद्भक्तितो जनः ॥ २० ॥
स्वातन्त्र्ये समवाप्ते च समृद्धिरपि सर्वथा ।
भवेच्छास्त्रकलावृद्धिर्लोकानां सुखकारिणी ॥ २१ ॥
एतां स्थितिं समुद्दिश्य यतन्ते ये दिवानिशम् ।
ते सर्वेऽपि महात्मानो वक्ष्ये निर्देशतश्च तान् ॥ २२ ॥
राष्ट्रकल्याणकृद्बुद्धिरत्र ग्राह्या विविक्षुभिः ।
सा हेतुर्हि प्रशंसायां परिणामो न कुत्रचित् ॥ २३ ॥
[२८]एव येऽप्यविचारेण दुष्टाः स्युश्च स्वतः कृतौ ।
तेऽत्र हेतुं पुरस्कृत्य प्रशंसार्हा मता मम ॥ २४ ॥
तिष्ठन्तु तेऽप्यनिर्दिष्टा अज्ञाताश्च तथापरे ।
येषां ख्यातिस्तु सर्वत्र तेषां कांश्चिद्वदामि ते ॥ २५ ॥
तत्रोत्तरेण चारभ्य लाला लजपतः[२९] सुधीः ।
येन लोकहिते यावदायुर्जीवितमर्पितम् ॥ २६ ॥
विरोधादप्रियो राज्ञां स्वदेशाच्च बहिष्कृतः ।
देशान्तरं गतश्चापि स्वजनस्य हिते रतः ॥ २७ ॥
एवमन्यः सत्त्वशीलो मालवीय[३०] इति श्रुतः ।
सदा विगतभीर्लोके विचरत्यत्र साधुकृत् ॥ २८ ॥
येन काश्यां स्थापित तद्विद्यापीठं सुविस्तृतम् ।
सहस्रशो भारतीयाः शिक्ष्यन्ते शास्त्रपारगैः ॥ २९ ॥
स्वकीयानां च दैन्येन यच्चित्तं व्यथितं किल ।
यावच्छक्यं सुखोपाये यतते पण्डितः सदा ॥ ३० ॥
प्रान्ते तत्रैव विख्यातावुदारौ नेहरूत्तमौ[३१] ।

पितापुत्रौ राजनीतिनिपुणौ लोकविश्रुतौ ॥ ३१ ॥
ऐश्वर्यं राजसदृशमधिकारिषु मान्यता ।
परित्यक्तं सर्वमेतन्मोतीलालमहात्मना ॥ ३२ ॥
जवाहरस्तत्सुतोऽपि सुखभोगे विरागवान् ।
देशभक्त्याप्युज्ज्वलया भारतेऽत्र विराजते ॥ ३३ ॥
बुद्धिमान्नीतिमान्वक्ता स्वकीयेषु दयापरः ।
एतादृशो हि विरलो राष्ट्रोद्धारे कृतोद्यमः ॥ ३४ ॥
तत्रैव दिल्लीनगरे[३१] श्रद्धानन्देति नामतः ।
कृतसर्वस्वसंन्यासः स्वजनार्थमुदारधीः ॥ ३५ ॥
धर्मान्तरगतानां यः परावर्तनमात्मवान् ।
चकार[३२] मृत्योराह्वानं तत्रैव गतभीः स्वयम् ॥ ३६ ॥
वङ्गीया राष्ट्रभक्ताश्च राजकार्यधुरंधराः ।
बहवः सन्ति चाभूवन्सर्वे कुशलबुद्धयः ॥ ३७ ॥
वङ्गभङ्गप्रतीकारे यो लोकानां धुरि स्थितः ।
सुरेन्द्रनाथः[३३] सुयशा लोकैरद्यापि स्मर्यते ॥ ३८ ॥
मृतोऽप्यमृत एवासौ यस्येहामृतपत्रिका ।
प्रकाशते देशभक्त्या मोतीलालः[३४] समुज्ज्वलः ॥ ३९ ॥
अदासी कर्तुमात्मीयान्दासो रञ्जन[३५] ईहते ।
संपत्सुविपुला येन चार्पिता लोकहेतवे ॥ ४० ॥
सुभाष बोसो[३६] गुप्तश्च सेनपूर्वस्तथापरः ।
एतौ चान्येऽपि बहवः सन्त्यद्यापि विचक्षणाः ॥ ४१ ॥
अरविन्दः[३७] प्रशान्तात्मा योगयुक्तः समाहितः ।
स्वकीयानां समुद्धारं चिन्तयन्नाश्रमे स्थितः ॥ ४२ ॥
दाक्षिणात्येष्वपि तथा [३८]आचार्याः सन्ति केचन ।
येषां लोकपरा बुद्धिर्भारतीयैः प्रशस्यते ॥ ४३ ॥

महाराष्ट्रेषु[39] तिलकोऽप्यग्रणीतिलकस्तथा ।
राजकीयेषु चतुरो गीतागूढार्थतत्त्ववित् ॥ ४४ ॥
प्रवर्तितो येन लोके नादगम्भीरकेसरी ।
क्षुद्राणां कम्पयत्येव अद्यापि हृदयानि सः ॥ ४५ ॥
एवं गोपालकृष्णोऽ[40]पि यस्य भारतसेवकाः ।
लोकसेवां प्रकुर्वन्तः स्वायुष्यं यापयन्ति हि ॥ ४६ ॥
तेषां स चाग्रणीः शास्त्री[41] रमते यः सदुद्यमे ।
यतते लोककल्याणायानिशं स उदारधीः ॥ ४७ ॥
महंमदीयाश्चान्येऽपि भवन्ति कृतबुद्धयः ।
ये स्वतो भारतीयानां हितार्थे निरताः सदा ॥ ४८ ॥
यदत्र राज्यकर्तारो बुद्धिभेदे कृतश्रमाः ।
महंमदीयानस्माकं विरोधे स्थापयन्ति ते ॥ ४९ ॥
अवमत्यैव तान्यत्नान्ये राष्ट्रहितबुद्धयः ।
रमन्ते लोककार्येषु ते प्रशस्यतरा इह ॥ ५० ॥
एवमन्येऽपि बहवो धनेन मनसा कृतैः ।
स्वबान्धवसुखायैते यतन्ते सुधियः सदा ॥ ५१ ॥
गुर्जराः पारसीकाश्च वाणिज्यनिरता अपि ।
दत्वा धनं बहुविधं साधयन्ति कृतार्थताम् ॥ ५२ ॥
ये त्वनिर्दिष्टनामानस्तेऽपि शस्यतमा इह ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ५३ ॥
राष्ट्रकार्ये महत्यस्मिन्नपेक्ष्यन्ते सहस्रशः ।
निःस्वा धीराश्च ते सर्वेऽप्यर्हन्तीह विभूतिताम् ॥ ५४ ॥

॥ इति श्रीगान्धीगीतायां विभूतियोगो नाम चतुर्दशोऽध्यायः ॥ १४

---

## अथ पञ्चदशोऽध्यायः ।

महात्मोवाच ।

एवं सततयुक्ता ये महात्मानः सुबुद्धयः ।
प्रकाशते सदा तेषु तेजसा पुरुषोत्तमः ॥ १ ॥
द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वत्र लोकेषु अक्षर पुरुषोत्तमः ॥ २ ॥
क्षरा प्रकृतिरेवैषां मूलतश्चञ्चला हि सा ।
नैकत्र रमते बुद्धिर्वैविध्ये च सदा रता ॥ ३ ॥
प्रारब्धं कार्यमेवेह नान्तं किंचित्समाप्नुते ।
अपूर्णं त्यज्यते लोकैर्विमूढैर्विघ्नसंशयात् ॥ ४ ॥
अथवान्यल्लाभकरं कार्यं दृष्ट्वा सुमोहिताः ।
प्रथमं यद्धस्तगतं तत्त्यजन्त्यल्पबुद्धयः ॥ ५ ॥
लोभातीतो भयातीत स्वीकृते कृतनिश्चय. ।
कार्यसिद्धिं समुद्दिश्य यतते पुरुषोत्तमः ॥ ६ ॥

भारतीय उवाच ।

विस्तरेण पुनर्ब्रूहि कृत्यमस्य महात्मनः ।
उत्तमत्वाद्धि लोकेऽसौ पुरुषोत्तम ईरितः ॥ ७ ॥
गार्हस्थ्ये वर्तमानोऽपि लभेद्वा सिद्धिमीदृशीम् ।
धर्मे चार्थे च कामे च कथं वर्तेत तन्मतिः ॥ ८ ॥
केषां गुणानां वै तस्मिन्नधिष्ठानं प्रयुज्यते ।
कानि चिन्हानि यैर्लोके ज्ञातुं शक्येत सोऽचिरात् ॥ ९ ॥

महात्मोवाच ।

सत्यं सदुर्गमो लोके ज्ञातुं तत्त्वेन भारत ।
यतोऽस्य कीर्तिविषये लालसा नैव विद्यते ॥ १० ॥
आत्मन्येव समाधानमात्मना प्राप्तवानसौ ।

येनान्यतः स साहाय्यं न कदाचिदपेक्षते ॥ ११ ॥
गार्हस्थ्ये वर्तमानोऽपि यः संन्यासी विरागवान् ।
स्वभावतः कर्मयोगी सहजे कर्मणि स्थितः ॥ १२ ॥
परार्थो वै यदा शक्यो भवेत्तस्य प्रयत्नतः ।
स्वयमेव तदागत्य परार्थे यतते सुधीः ॥ १३ ॥
सिद्धे परार्थेऽनीहः सन्स्तुतिमात्रेऽपि लौकिके ।
स्वकीयां सहजां वृत्तिमचिरात्पुनरश्नुते ॥ १४ ॥
ज्ञाता लौकिकवृत्तीनामुद्यतो लोकहेतवे ।
स्वार्थे विरक्तः सर्वत्र कथं वन्द्यः स नो भवेत् ॥ १५ ॥
एतादृशा हि पुरुषाः पूर्णेनांशेन निर्मिताः ।
ईश्वरेण स्वकीयेन जगदुद्धारकारणात् ॥ १६ ॥
तमेव सततं ध्यात्वा तेनैव प्रेरिता भृशम् ।
कार्योद्यता भवन्तीह सर्वे तस्यैव प्रीतये ॥ १७ ॥
ईश्वरप्रेरिते कार्ये निःशङ्का निर्भयाश्च ते ।
समाः सिद्धावसिद्धौ च रमन्ते पुण्यकारिणः ॥ १८ ॥
लाभे न सुखमेतेषां हानिरेषां न दुःखदा ।
त्यक्तस्वाः सततं धीरा विराजन्ते सदा भुवि ॥ १९ ॥
अन्ये तेजस्विनः सन्ति बुद्धिमन्तो निरालसाः ।
ये स्वकार्यबलाद्राष्ट्रे धुरीणत्वपदं गताः ॥ २० ॥
तेषां संमानपूजासु लोकोऽपि रमते मुदा ।
यथा कृतार्थता पश्य उभाभ्यामनुभूयते ॥ २१ ॥
लोककल्याणकार्ये तु दक्षोऽपि पुरुषोत्तमः ।
न मानपूजामादत्ते एकाकी संवसन्सुखी ॥ २२ ॥
भारतीया युवानो ये तैः स्वीकर्तव्यमीदृशम् ।
व्रतं कष्टतमं यत्तु स्वकीयानां हितावहम् ॥ २३ ॥

आंग्लानां मायथा सर्वे मोहिता हिन्दबान्धवाः ।
मोक्षोपायमजानन्तः क्लिश्यन्ते पीडिता भृशम् ॥ २४ ॥
अज्ञानतिमिरान्धानामेषां सन्मार्गदर्शकाः ।
भवेयुस्तरुणा एव शिक्षयन्तः स्वतश्च तान् ॥ २५ ॥
ये त्वांग्लपाठशालासु शिक्षिता युवका इह ।
तैरेवैवं स्वकीयानां यतितव्यं समुन्नतौ ॥ २६ ॥
निरीहैः स्वसुखावाप्तौ राजसमाननादिषु ।
राष्ट्रकार्यमिदं चादौ साधितव्यं प्रयत्नतः ॥ २७ ॥
त्यागशीलैर्भारतीयैः कार्यं दिव्यमलौकिकम् ।
तेन दास्याद्विनिर्मुक्तिरचिराद्वै भवेदिह ॥ २८ ॥
येनैवं कृतिनो लोका अजानन्तोऽपि सर्वशः ।
भवेयुः सुखिता राष्ट्रे धुरीणानां समुद्यमात् ॥ २९ ॥
दैवीसंपत्सत्त्वनिष्ठा दृश्यते पुरुषोत्तमे ।
सूज्ञैः संपादनीया सा युवभिश्च सुशिक्षितैः ॥ ३० ॥
॥ इति श्रीगान्धीगीतायां पुरुषोत्तमयोगो नाम
पञ्चदशोऽध्यायः ॥ १५ ॥

---

## अथ षोडशोऽध्यायः ।

भारतीय उवाच ।
दैवी संपद्विमोक्षाय निबन्धायासुरी मता ।
स्मृतमेतद्भगवतो वाक्यं वै वचनात्तव ॥ १ ॥
दैवी संपत्कथं चास्मान्मोक्षयिष्यति तद्वद ।
बद्धाः के वा वदासुर्या ये न जानन्ति किंचन ॥ २ ॥
मोक्षोऽपि वद चैतेषां केनोपायेन वै भवेत् ।

भारतीयाः कथं वात्र यतेरन्स्वविमुक्तये ॥ ३ ॥
राष्ट्रकार्ये कथं वै स्याद्दैवीसंपत्सुखावहा ।
मूढानां सर्वथास्माकं भव सत्पथदर्शकः ॥ ४ ॥

महात्मोवाच ।

पुरा भगवता सर्व पार्थाय विशदीकृतम् ।
तदेव वः प्रवक्ष्यामि गीतातात्पर्यमुत्तमम् ॥ ५ ॥
गीताधर्मे हि कर्माणामनासक्तिर्विशिष्यते ।
राष्ट्रकार्येऽपि सैवेह भवेत्सिद्धिकरी नृणाम् ॥ ६ ॥
अभयं प्रथमं तावद्दैवीसंपद्विशेषणम् ।
सेवितव्यमिहास्माभिरादौ राष्ट्रहितावहम् ॥ ७ ॥
मृत्युभीतिः क्लेशभीतिर्निन्दाभीतिस्तथैव च ।
एवं सदा भीतभीता वयं दैन्यमुपास्महे ॥ ८ ॥
तत्रापि मरणाद्भीतिः सर्वास्वपि विशिष्यते ।
राजदण्डात्स्वयं तेन द्रवामः कम्पिताः सदा ॥ ९ ॥
ईश्वरप्रेषिताश्चैतेऽप्यांग्लाः शासनधारिणः ।
इति श्रद्धायुता भीत्वा प्रणतास्तान्सदा वयम् ॥ १० ॥
भीतिं तां वै निराकृत्य धैर्यमालम्ब्य यत्नतः ।
तेषां च पुरतोऽस्माभिः स्थातव्यं कार्यसिद्धये ॥ ११ ॥
माहात्म्यमभयस्यैवं सहज सिद्धमेव च ।
निर्भयानां हि कार्यस्य गतिः सर्वत्र विद्यते ॥ १२ ॥
स्वीकृते कर्मणि मतिः स्थिरा इत्यप्यपेक्ष्यते ।
चञ्चला वृत्तिरेवेह कार्ये हानिकरी नृणाम ॥ १३ ॥
परतन्त्रस्य राष्ट्रस्य स्वाध्यायोऽपि विधीयते ।
कर्तृत्वं पूर्वजानां तद्येनानुक्रियते जनैः ॥ १४ ॥
शारीरं वाङ्मयं चैव मानसं त्रिविधं तपः ।

यः साधयति राष्ट्रार्थे स देवस्यांश उच्यते ॥ १५ ॥
स्वकीयेषु क्षमावृत्तिरक्रोधः शान्तिरेव च ।
दौरात्म्यस्य प्रतीकारे धृतिस्तेजश्च मानिता ॥ १६ ॥
दैवीसंपद्विशिष्टोऽयं लोकः प्रायो यदा भवेत् ।
तदा समृद्धिःसौख्यस्याप्यचिरान्नागमिष्यति ॥ १७ ॥
आसुरी राजसी वृत्तिस्तामसी राक्षसी तथा ।
एताभ्यां प्रत्यवायोऽत्र राष्ट्रकार्ये ह्यनेकधा ॥ १८ ॥
सुखाभासान्समुत्पाद्य विविधांल्लोकमोहनान् ।
एताभ्यां नीयते लोकोऽप्यसत्पथि सहस्रशः ॥ १९ ॥
राजसंसदि संमानश्चातुलं मोहनं नृणाम् ।
येन स्वकीयघाताय सज्जन्ते प्राकृता नराः ॥ २० ॥
वृथाभिमानात्पश्यैते दण्डेन प्रहरन्त्युत ।
स्वबान्धवान्सुनिःशङ्काः सत्कार्यनिरतानपि ॥ २१ ॥
परसेवारताः सर्वे स्वकीयान्गणयन्ति न ।
अस्मत्कर्तव्यमेवेदं प्रलपन्तीति सर्वतः ॥ २२ ॥
केषांचित्पश्य मानाशा केषांचिद्भोगलालसा ।
एवं हि बहुभिर्लोके आसुरी वृत्तिरिष्यते ॥ २३ ॥
प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौच नापि चाचारो न सत्यं तेषु विद्यते ॥ २४ ॥
ततोऽपि राक्षसीं वृत्तिं निन्द्यां केचित्समासते ।
क्लेशाय सर्वथा नृणां या स्याद्धानिकरी भृशम् ॥ २५ ॥
परकल्याणभावेन दैवी वृत्तिरधिष्ठिता ।
यत्र स्वसौख्यवैराग्यं सहजं वै प्रतीयते ॥ २६ ॥
स्वसौख्यमानमाहात्म्यमुद्दिश्यासुरवृत्तयः ।
यतन्ते परकार्येषु उदासीनाः स्वबन्धुषु ॥ २७ ॥

परस्योत्सादनार्थं वै सज्जते राक्षसी मतिः ।
उत्तमाधममध्यानां विवेकं पश्य सर्वथा ॥ २८ ॥
तस्माद्दैवी संपदेव लोककल्याणकारिणी ।
मता श्रेष्ठतमा चेह सा संपाद्या प्रयत्नतः ॥ २९ ॥
निरस्य मोहकलिलं वितरिष्यति शाश्वतीम् ।
तेजःसमृद्धिं सैवेह मातृभूमेः सुखाय नः ॥ ३० ॥

॥ इति श्रीगान्धीगीतायां दैवासुरसंपद्विभागयोगो नाम षोडशोऽध्यायः ॥ १६ ॥

---

## अथ सप्तदशोऽध्यायः ।

संजय उवाच ।

मिथः संवदतोरेवमितरेषां च शृण्वताम् ।
प्रादुरासीत्ततस्तत्र हिन्दमाता यशस्विनी ॥ १ ॥
उपविष्टस्य तस्यैव शरीराद्वै महात्मनः ।
निःसृतेव पुरो भाति महदाश्चर्यमीदृशम् ॥ २ ॥
तस्यां प्रादुर्भवन्त्यां वै विद्युन्माला नभोगता ।
लिलेख स्फुरितैश्चित्रैर्विचित्रमतिभास्वरम् ॥ ३ ॥
सागरः प्रजगर्जाथ वीचीभिश्च तथोच्छ्रितम ।
यथा मिलितमेव स्यान्नभसः सागरस्य च ॥ ४ ॥
पृथिव्यां च समुद्भूतो निनदः सुमहांस्तथा ।
यदा चेयं मातृभूमिराविरासीच्छरीरिणी ॥ ५ ॥
मलिनं जीर्णमेवैकं बिभ्रती वस्त्रमातुरा ।
विवर्णवदना दीना क्लिश्यमानेव चान्तरा ॥ ६ ॥
तस्याः पादौ तथा हस्तौ सुबद्धौ शृङ्खलायुतौ ।

भीतेव सर्वतो देवी पश्यन्ती शरणार्थिनी ॥ ७ ॥
त्रायध्वमिति दुःखार्ता रुदती करुणं बहु।
पाशैर्निगडिता क्षीणा दृष्टा सर्वैरधोमुखी ॥ ८ ॥
तां दृष्ट्वैव सुसंभ्रान्ता भारतीयपुरःसराः।
ततः प्राञ्जलयः सर्वे परिवार्याग्रतः स्थिताः ॥ ९ ॥

भारतीय उवाच।

का त्वं मातर्नमस्तेऽस्तु किं ते दुःखं वदेह नः।
वय हि बान्धवाः सर्वे निदेशेऽत्र तव स्थिताः ॥ १० ॥
अत्राप्यागमनं दूरात्तापदं प्रतिभाति ते।
वेषो दीनतमश्चायं विवर्णा चैव दृश्यसे ॥ ११ ॥

मातोवाच।

युष्माक यत्र वै जन्म यत्र चैव सुपोषणम्।
सा हिन्दभूमिः प्रख्याता एषा वः पुरतः स्थिता ॥ १२ ॥
विहरन्तः सदाप्यत्र न देवास्तृप्तिमाप्नुवन्।
लोके पुण्यतमा भूमिरिति कीर्तिः पुरा मम ॥ १३ ॥
सैवेदानीं निगडिता परदास्येन पुत्रकाः।
बन्धनैराकुला त्राणं न पश्यामि कुतश्चन ॥ १४ ॥

संजय उवाच।

श्रुत्वैवं वचनं तस्या व्याकुलो विस्मितस्तथा।
प्रणम्योवाच दुःखार्तो भारतीय स्वमातरम् ॥ १५ ॥
दुर्लभ भारते जन्म मानुष्य तत्र दुर्लभम्।
पूर्वेषां महिमानोक्तिरिय विफलतां गता ॥ १६ ॥
येन पूर्वकृत पापमभुक्त स पुनर्भवन्।
भारते जन्म लभते दुःखभावाय सर्वथा ॥ १७ ॥

हा धिक् कष्टं जीवितं चास्मदीयं
क्लेशास्पदं सर्वथैवोपपन्नम् ।
न जानीमो दुष्कृतीनां विपाकः
पूर्वासां वा कारणं वान्यदत्र ॥ १८ ॥

क्व प्राचीनं वैभवं भारतीयं
तन्माहात्म्यं यद्धि वेदेषु गीतम् ।
क्व ते धीराः पुरुषा भारतीया
जातैश्च यैर्जन्मभूमिः कृतार्था ॥ १९ ॥

अहो मातः शंसितुं ते हि रूपं
प्रोत्साहिताः कवयः साधुवृत्ताः ।
तेषां काव्यममृत दीप्तिमच्च
पश्यास्माकं पूज्यतमं मत च ॥ २० ॥

या पुण्यभूमिः प्रथितेह लोके
यत्राभूवन्राजसूयाश्वमेधाः ।
आत्मज्ञाने निरताः सर्वदैव
राजानो वै ब्राह्मणाश्चाप्यभूवन् ॥ २१ ॥

चातुर्वर्ण्यं यत्र संस्थापितं स-
त्सर्वेषां वै सौख्यहेतुर्बभूव ।
सर्वे तुष्टा ऋद्धिमन्तो जनाश्च
स्वस्मिन्कर्मण्येव सतोषभाजः ॥ २२ ॥

स्वाध्यायिनो यत्र विप्रा बभूवु-
र्दयालवश्चैव वैराग्यशीलाः ।
आर्तानां वा रक्षणे वीरवृत्ति-
क्षत्रे ह्यासीत्सर्वथा या प्रशस्या ॥ २३ ॥

वाणिज्येऽपि स्वस्तिमन्तो हि वैश्या
कृषीवलाः सस्यसमृद्धिभाजः ।
सेवाकार्ये सौख्यमेवेह लोके
भुञ्जानोऽसौ प्रीतिमाञ्शूद्र आसीत् ॥ २४ ॥

पुण्यश्लोकाः पार्थिवा यत्र चास-
न्रामश्च कृष्णश्च युधिष्ठिराद्याः ।
येषां कथाः पावनास्ताः पठन्तो
लोका मातस्तृप्तिमद्यावहन्ति ॥ २५ ॥

यत्राभूवंश्चन्द्रगुप्तादयो ये
विजिग्युराजावपरान्नृपालान् ।
येषां कीर्तिः प्रसृता दूरदेशे
तत्रत्यैर्या वर्णिता चेतिहासे ॥ २६ ॥

हिमालयो रक्षति यामुदीच्यां
सौन्दर्यात्मा प्रथितः शैलराजः ।
यत्रास्य नित्यं धवले च सानौ
रमन्ते वै रुद्रमुखाः सुरेन्द्राः ॥ २७ ॥

यत्रोद्गता ब्रह्मपुत्रा च गङ्गा
सिन्धुर्यथा विस्तृतः सागरोऽन्यः ।
तथेतराभिश्च सरिद्भिरेष
देशः कृतः सस्यमयः समृद्धः ॥ २८ ॥

कटिप्रदेशे प्रसृतश्च विन्ध्यः
सह्यस्तथा दक्षिणस्यां दिशायाम् ।
नानानद्यः स्वजलैस्तर्पयन्ति
मातुः सुतान्विपुलैर्भारतीयान् ॥ २९ ॥

क्षेत्राणि तीर्थानि च पावनानि
स्वयं लोकान्सत्पथं दर्शयन्ति ।
महोदधिः खेलति प्रान्तदेशे
पुष्णातु सा मातृभूमिः सदास्मान् ॥ ३० ॥
वन्दामहे ते अयि पादपङ्कजं
सेवामहे सर्वथा प्रीतये च ।
तवोत्कर्षं चिन्तयन्तो न शान्ति
भजामहे साधुना नः प्रसीद ॥ ३१ ॥

संजय उवाच ।

एवमुक्ता तदा पुत्रैर्विवर्णवदनैर्भृशम् ।
माता प्रोवाच तान्सर्वान्बोधयन्ती स्थितिं स्वकाम् ॥ ३२ ।
पुरा कुपुत्रैः परिपीडिताहं
कृता परेषां वशगास्तु धिक्तान् ।
मिथो द्वेषात्कलहाद्धानिरेषा
आपादिता ज्ञायते नैव कैश्चित् ॥ ३३ ॥
तत्रापीदं दुःखमत्यन्तमेव
यद्दास्यस्था हीनतामाप्नुवन्तः ।
सुखोदर्कां स्वां स्थितिं कल्पयन्ते
तत्रारमन्ते मुदिता विमूढाः ॥ ३४ ॥
स्वकीयान्परवत्त्यक्त्वा परकीयान्भजन्ति ते ।
दास्यं च बहु मन्वानाः किं नु दुःखमतः परम ॥ ३५ ॥
इस्लामीयाः परकीयास्तथापि
मदङ्कमाश्रित्य भृशं कृतार्थाः ।
वसन्ति मां जन्मभूमिं च मत्वा
मत्पुत्रास्ते बान्धवा युष्मदीयाः ॥ ३६ ॥

अन्येऽप्येवं पारसीकादयश्च
यैः स्वीकृताहं बत मातृबुध्या ।
मोदन्तां ते सर्व एवैक्यभावे
बन्धुत्वेन प्रार्थिता वर्तमानाः ॥ ३७ ॥
एषु द्वैतं कारयित्वा यतन्ते
आंग्ला एते राज्ययन्त्रस्य सिद्धौ ।
इस्लामीयान्हिन्दुजने विरुद्धा-
न्कृत्वा धूर्ताः स्वार्थपरा हसन्ति ॥ ३८ ॥
एषां प्रियः कश्चिदपीह नास्ति
स्वार्थायैते वञ्चयन्तीह लोकान् ।
लोभाविष्टः क्षुद्रमतिर्जनोऽपि
दास्यायासौ यतते कष्टमेतत् ॥ ३९ ॥
एतां लोके दुर्गतिं बोधयन्तः
सत्पुत्रा मे लालबालौच पालः[४२]
आंग्लानां वै कोपदृष्ट्या प्रदग्धा
गता इतः स्वान्तरा क्लिश्यमानाः ॥ ४० ॥
तथैवाय यतमानो महात्मा
युष्मद्दशा कार्यसिद्धिं प्रपश्यन् ।
अपेक्षते निश्चय चैक्यभावं
कार्ये रतिं क्लेशमहां च वृत्तिम् ॥ ४१ ॥
एवं प्रयतमानेषु युष्मासु विजयो ध्रुवः ।
ममापि बन्धनिर्मुक्तिः संशयो नात्र विद्यते ॥ ४२ ॥
॥ इति श्रीगान्धीगीताया मातृदर्शनयोगो नाम
सप्तदशोऽध्याय ॥ १७ ॥

---

## अथ अष्टादशोऽध्यायः।

भारतीय उवाच।

मातृद्रोहात्मकं घोरं पापं चरितमीदृशम्।
तेन तप्यामहे मातः पतिता निरयेऽधुना ॥ १ ॥
सापि दुःस्थितिरस्माकमतीव क्लेशकारिणी।
निराकरिष्यते चांग्लैरचिराच्छासने स्थितैः ॥ २ ॥
एवं दुराशया विद्धाः सर्वदा तानुपास्महे।
तेषां कृपाकटाक्षेण वाञ्छन्तश्च समुन्नतिम् ॥ ३ ॥
इदानीं तु महात्मासौ सर्वेषामग्रणीः सुधीः।
यद्वदिष्यति तत्कर्तुं निश्चयेन स्थिता वयम् ॥ ४ ॥
लोकेऽवमानिता नित्यमुदरंभरणेऽक्षमाः।
यास्यमानाः क्षयं चाद्य स्वधर्माय प्रबोधिताः ॥ ५ ॥
मातर्मा खिद्य शोच्यं ते यद्गतं न कदापि तत्।
यतामहेऽधुना सर्वे तव बन्धविमुक्तये ॥ ६ ॥
न भवामः प्रचलिताः कार्यात्प्राणात्ययेऽपि च।
मातः प्रसीद पाह्यस्मान्दयां कुरु दयां कुरु ॥ ७ ॥

संजय उवाच।

इत्युक्त्वा प्रणताः सर्वे मातुः स्पृष्ट्वा पदावुभौ।
सापि तान्पुनरेवाह हिन्दभूमिः शरीरिणी ॥ ८ ॥

हिन्दमातोवाच।

स्थिरबुद्धिर्यदीयं वो व्रतं स्याद्यदि स्वीकृतम्।
भाग्योदयस्य कालोऽयं सहजः स्यादुपस्थितः ॥ ९ ॥
सर्वे यतध्वं कार्येषु वचनेन महात्मनः।
जात एष सुपुत्रो मे ईश्वरस्य प्रसादत. ॥ १० ॥
ये नियुक्ताः परैरत्र राज्ययन्त्रस्य रक्षणे।

ये चास्मदीयास्तेषां वै सेवका वशगास्त्विह ॥ ११ ॥
ते युष्मान्विविधोपायैर्भीषयिष्यन्ति पुत्रकाः ।
सुखसंदर्शनैश्चापि मोहयिष्यन्ति सर्वथा ॥ १२ ॥
तेषां कृतिषु वाक्येषु हास्येषु रुदितेष्वपि ।
विश्वासो नैव कर्तव्यो मिथ्या तन्मोहचेष्टितम् ॥ १३ ॥
" भवतामेव सौख्याय दूरादागत्य वै वयम् ।
क्लेशिता अपि राष्ट्रस्य हिताय प्रयतामहे ॥ १४ ॥
स्वार्थे बुद्धिर्न चास्माकं, परार्थे त्यक्तजीवितान् ।
अस्मानप्यवमत्यैते स्वनाशाय समुद्यताः ॥ १५ ॥
न शृण्वन्ति हितं वाक्य कृतघ्ना हिन्दवासिनः ।
स्वतन्त्राः ससुखाः सर्वे हठात्स्वाहितकारिणः ॥ १६ ॥
तान्वयं स्वमतोपायैर्निर्वर्तयितुमीप्सवः ।
विफले सामवचसि दण्डमप्युपयुञ्ज्महे ॥ १७ ॥
लोककल्याणकर्तृत्वं कठोरं व्रतमीदृशम् ।
तत्सिद्धये बतास्माक नान्यः पन्थेह विद्यते ॥ १८ ॥ "
इत्येवं भाषमाणास्ते स्वराष्ट्रस्य हिते रताः ।
स्वार्थमावृत्य सौहार्दं दर्शयन्तो निरालसाः ॥ १९ ॥
युष्मत्कार्यविरोधाय यतमाना विचक्षणाः ।
राजशासनभङ्गस्य दोषं द्रक्ष्यन्ति सर्वतः ॥ २० ॥
कारागारेषु निक्षिप्य ततश्चाग्रेसरान्बहून् ।
दण्डभीतिं च युष्मासु स्थापयिष्यन्ति वै ततः ॥ २१ ॥
मुखेन शान्तिगीतानि पठन्तः सर्वतोमुखाः ।
करेण प्रहरिष्यन्तो न लज्जन्तीह ते जने ॥ २२ ॥
कार्यस्य मा विरामोऽस्तु त्यक्त्वा भीतिं यतव्रताः ।
राजशासनमेवैषां यतध्वं रोद्धुमग्रतः ॥ २३ ॥

सर्वतोऽप्येककालेन दृष्ट्वा लोकान्समुत्थितान् ।
शस्त्रैः प्राणापहरणे यतेरन्नाज्यरक्षकाः ॥ २४ ॥
प्राणात्ययेऽप्यभीता वै यदा यूयं भविष्यथ ।
आक्रोशन्ति बहिष्काराद्यदैषां बान्धवा भृशम् ॥ २५ ॥
वाणिज्यवृत्तयश्चांग्ला हानिं दृष्ट्वा महत्तमाम् ।
स्वबान्धवानेव तदा उपदेक्ष्यन्ति सत्पथम् ॥ २६ ॥
तदैव केचित्समितावुदारा आंग्लपूरुषाः ।
पक्षमाश्रित्य चास्माकं भर्त्सयिष्यन्ति शासकान् ॥ २७ ।
" स्वातन्त्र्यदानेऽप्यांग्लानां माहात्म्यं प्रथितं भवेत् ।
वशगाश्चापि वर्तेरन्सर्वे भारतवासिनः ॥ २८ ॥
त्यज्यतामविवेकोऽयं देशे शान्तिः प्रवर्त्यताम् ।
सुख वै सामदानाभ्यां दण्डे हानिरनेकधा ॥ २९ ॥"
बुद्धिवादमिमं श्रुत्वा स्वकीयानां हितावहम् ।
कृतिं तदनुसारेण करिष्यन्तोऽधिकारिणः ॥ ३० ॥
भारतीयान्कतिपयान्समाहूय प्रयत्नतः ।
राष्ट्रस्थितिं समुद्दिश्य उपायांश्चिन्तयन्ति ते ॥ ३१ ॥
चर्चाकाले तु तत्रापि भेदो दृश्येत वै महान् ।
नैकमत्यं धुरीणानां स्वराज्यघटनां प्रति ॥ ३२ ॥
महात्मापि तदैवायं तत्र लोकैः स्मरिष्यते ।
मानेन बन्धनान्मुक्त आहूयेतांग्लसंसदि ॥ ३३ ॥
गत्वापि तत्र नैवाशा स्वराज्यस्य कदाचन ।
महंमदीया धूर्तानां वशगा वै विरोधिनः ॥ ३४ ॥
हिन्दीयेषु मिथो भेद आंग्लानां हितमावहेत् ।
इति ज्ञात्वापि समितौ विरोधो दृश्यते सदा ॥ ३५ ॥
उदारास्त्वांग्लनेतारो राष्ट्रे शान्तिमभीप्सवः ।

सर्वेषां हितमुद्दिश्य यत्किंचित्साधयन्ति ते ॥ ३६ ॥
तत्संतोषकरं नैव ह्यत्रत्यानां च कस्यचित् ।
असंतोषेण राष्ट्रस्य वृत्तिः सर्वत्र व्याकुला ॥ ३७ ॥
कारागृहान्मोचितोऽयं महात्मा मत्सुतः सुधीः ।
आंग्लैः समेतोऽपि मुदा कार्यलाभाय नो ध्रुवम् ॥ ३८ ॥
भेदेन जीवमानास्ते स्वकार्यकुशलाः सदा ।
तत्रापि भेदमुत्पाद्य समितिं घातयन्ति हि ॥ ३९ ॥
यावद्भेदं समाश्रित्य सर्वे वै हिन्दवासिनः ।
कलहे निरतास्तावत्परेषां लाभ एव हि ॥ ४० ॥
ऐक्यमेव प्रभवति नित्यं राष्ट्रोदयाय हि ।
तस्माद्यतध्वं राष्ट्रैक्ये मा भेदो घातकोऽस्त्विह ॥ ४१ ॥
एवमन्तेऽपि राष्ट्रस्य सिद्धिर्युष्मद्वशानुगा ।
सर्वेषां ऐक्यमेवेह कार्ये साधनमेष्यते ॥ ४२ ॥
राष्ट्रकार्यपरा बुद्धिः कर्तव्या त्यागशालिनी ।
कार्यसिद्धिश्च महती तामेव स्यात्समाश्रिता ॥ ४३ ॥

संजय उवाच ।

अन्तर्हिता ततो माता त्यागमुद्दिश्य तान्स्वयम् ।
भारतीयास्ततः सर्वे महात्मानमुपस्थिताः ॥ ४४ ॥

भारतीया ऊचुः ।

नष्टो मोहः स्मृतिर्लब्धा प्रसादात्तव व विभो ।
स्थिताः स्मो गतसंदेहाः करिष्यामो वचस्तव ॥ ४५ ॥
चालयास्मान्यथेच्छं त्वं त्यागोऽस्मासु विधीयताम् ।
प्रेरयास्मिन्महत्कार्ये न भीतिर्लेशतोऽपि नः ॥ ४६ ॥

संजय उवाच ।

यथा मात्रा भाषितं तत्तथा सर्वमभूत्किल ।

आदौ कारागृहे बद्धो महात्मा राजसेवकैः ॥ ४७ ॥
आंग्लामात्यनियोगेन पश्चात्तैरेव संमता ।
महात्मनो बन्धमुक्तिरांग्लेषु गमनं तथा ॥ ४८ ॥
ये तु तत्र समाहूताः स्वराज्यस्थापनार्थं[४३] वै ।
तेषु सर्वत्र भेदोऽभूदैक्यं नादृश्यत क्वचित् ॥ ४९ ॥
पुनः प्रतिनिवृत्तोऽसौ महात्मापि स्वदेशगः ।
कारागृहे पुनर्बद्ध आंग्लशासनमीदृशम् ॥ ५० ॥
यदा तु घोषितं राष्ट्रे नवीनं राजशासनम् ।
तदा भेदकरा नीतिः सर्वत्र समदृश्यत ॥ ५१ ॥
अस्पृश्यानां पृथक्त्वेन निर्देशोऽत्र विशेषतः ।
असंमतो धुरीणानां महात्मा क्लेशितो भृशम् ॥ ५२ ॥
[४४]प्रायोपवेशनपरः स्थितः कारागृहे तदा ।
अस्मदीया विभज्यन्ते धूर्तैर्धिगिति चाब्रवीत् ॥ ५३ ॥
यदा त्विदं महद् वृत्तं ज्ञातं सर्वैरपि प्रभो ।
तदा चिन्तातुराः सर्वे धुरीणा मिलिता जनाः ॥ ५४ ॥
तेषामग्रे तदा माता पुनराविर्बभूव ह ।
उग्ररूपधरा देवी क्लिश्यन्ती चान्तरा भृशम् ॥ ५५ ।

मातोवाच ।

ऐक्यमस्तु शुभं शीघ्रं सर्वेषां हिन्दवासिनाम् ।
इति हेतुं पुरस्कृत्य यततेऽयं चिरं सुधी ॥ ५६ ॥
भेदो हि कलहस्यैव मूलमैक्यं सुखावहम् ।
इति सामान्यतस्तत्त्वमस्मदीयैर्न बुध्यते ॥ ५७ ॥
महंमदीयाश्चान्येऽपि पृथग्धर्मसमाश्रिताः ।
सुता मदीयाः सर्वे ते बान्धवा हिन्दवासिनः ॥ ५८ ॥
यूयं भेदैः समाक्रान्ताः कलहे च रताः सदा ।

येनांग्लानां सुखं राज्यं हिन्दभूमौ प्रवर्तते ॥ ५९ ॥
तन्न जानीथ दुर्भाग्यं किमितः स्यान्महत्तरम् ।
स्वकीयेष्वपि चास्पृश्या इति भेदः पुरस्कृतः ।
धूर्तास्तेन प्रमोदन्ते कलह प्रेरयन्ति च ॥ ६० ॥
न प्राक्तनेषु धर्मेषु अस्पृश्यानां समुद्गमः ।
चत्वार एव वर्णा हि पञ्चमो नैव विद्यते ॥ ६१ ॥
वृत्तभेदाद्वर्णभेदः समाजे यदि दृश्यते ।
धर्मक्षेत्रे विरोधो न कर्तव्य. सर्वदा बुधैः ॥ ६२ ॥
स्वकीया एव एते वै पञ्चमा इति कीर्तिताः ।
मा तेषां दूरतस्त्याग ऐक्यस्य स विघातकः ॥ ६३ ॥
संहतौ देवयात्रायां स्पर्शस्तेषा न बाधकः ।
यूयं ज्येष्ठा हि विद्वांसो मा भेदं कुरुतेदृशम् ॥ ६४ ॥
धर्मो हि हृदयज्योति. स्वयं चेज्ज्वलतेऽन्ततः ।
बाह्यस्पर्शः कथं तत्र भ्रंशयेत्तं शरीरतः ॥ ६५ ॥
तस्मात्सर्वे प्रयत्नेन एकीभवितुमर्हथ ।
ऐक्ये सिद्धे हि राष्ट्रस्य कोऽन्यस्तद्धर्षयिष्यति ॥ ६६ ॥
सनातनीय धर्मस्य रीतिरुन्नतिकारिणी ।
समुन्नयति जीवन्तं यतमानं परं पदम् ॥ ६७ ॥
मा वः संशयलेशोऽत्र धर्महानिर्न वै क्वचित् ।
महात्मनोऽनुसारेण वर्तयध्वमतन्द्रिताः ॥ ६८ ॥

संजय उवाच ।

एवं संत्रोद्यमानास्ते धुरीणाः सर्वतस्तदा ।
सर्वेषामैक्यमुद्दिश्य प्रयत्न चक्रिरे भृशम् ॥ ६९ ॥
अस्पृश्य इति नामापि न श्रूयेत यथा तथा ।
तेषां समुद्यमं दृष्ट्वा महात्मा मुदितोऽभवत् ॥ ७० ॥

सर्वे हरिजना एते बान्धवा हिन्दुधर्मिणः ।
विष्णुभक्ताश्च सन्तश्च राष्ट्रस्य हितकारिणः ॥ ७१ ॥
महंमदीयाश्च तथा मातुरुद्धारमीप्सवः ।
धुरीणैः संगताः सर्वे[४५] प्रयागे चैक्यमानसाः ॥ ७२ ॥
एवं सर्वत्र राष्ट्रैक्यं घुष्यमाणं समुज्ज्वलम् ।
श्रुत्वापि राज्यकर्तॄणां मतिर्भ्रान्ता न वै तदा ॥ ७३ ॥
कुटिलां नीतिमालम्ब्य प्रजाभेदं चिकीर्षवः ।
न मन्यन्ते धुरीणांस्ते निजशासनमानिनः ॥ ७४ ॥

॥ इति श्रीगान्धीगीतायां मात्रादेशयोगो नाम
अष्टादशोऽध्यायः ॥ १८ ॥

---

## अथ एकोनविंशोऽध्यायः ।

संजय उवाच ।

मोहान्धस्त्वं महाराज याथातथ्यं न पश्यसि ।
धृतं राष्ट्रं त्वदीयैस्तेऽप्यन्धा राज्यमदादिह ॥ १ ॥
इदानीं कालमाहात्म्यात्कृपया चेश्वरस्य वै ।
यथार्थदर्शी लोकोयं जातः सत्पथमाश्रितः ॥ २ ॥
स्वहितं च समुद्दिश्य यतमानः प्रदृश्यते ।
अचिराद् भारतीयास्ते स्वातन्त्र्यसुखमाप्नुयुः ॥ ३ ॥

धृतराष्ट्र उवाच ।

मैवं वद महाभाग कुशला राजकर्मणि ।
मदीया भेदमाश्रित्य चिरं स्थास्यन्ति भारते ॥ ४ ॥
हिन्दुमुस्लीमयोरैक्यं न कदापि भविष्यति ।
तेन स्वातन्त्र्यलाभश्च कस्यापि सुलभो न हि ॥ ५ ॥

यावद्भेदो भवेल्लोके तावदांग्ला यशस्विनः ।
स्वार्थं संसाधयन्तीह विरोधस्तत्र दुर्बलः ॥ ६ ॥
महात्मनः प्रयत्नाना वैफल्यं भेदकारणात् ।
आंग्लानां च सुखावाप्तिरमुखं हिन्दवासिनाम् ॥ ७ ॥

संजय उवाच ।

यदेतदुच्यते राजंस्तत्सत्यं सर्वथा किल ।
सर्वेषामैक्यभावाय महात्मा यतते सदा ॥ ८ ॥
तथापि भारतीयेषु न सिद्धिर्दृश्यते क्वचित् ।
मुस्लीमानां विरोधेन कार्यघातः सुनिश्चितः ॥ ९ ॥
भेदप्रस्थापनार्थाय जिनाप्रभृतिभिर्यदा ।
स्थापितैव पृथक्त्वेन मुस्लीमसमितिः[४६] स्वयम् ॥ १० ॥
तत्रैषां संमतं तत्त्वमनर्थानां च कारणम् ।
स्वीकृतं प्रकटं सर्वैः समितौ प्रथमं तदा ॥ ११ ॥
भिन्नो धर्मस्तथाचारो मुस्लीमानां यथा तथा ।
तेषामैक्य हिन्दुभिः स्यादशक्य बत सर्वथा ॥ १२ ॥
सर्वेऽऽप्येते भारतीया बान्धवा इति यज्जने ।
गान्धीप्रभृतिभिश्चोक्त तन्न सत्यं कदाचन ॥ १३ ॥
अशिक्षिता हि बहवो मुस्लीमेषु दरिद्रिताः ।
वञ्चनायैव राष्ट्रैक्यं तेषां स्यान्नात्र संशयः ॥ १४ ॥
एवमुद्घोषयन्तस्ते चांग्लानामुपकारकाः ।
स्वीकृताः स्वागतेनैव मुदितै राज्यशास्तृभिः ॥ १५ ॥
यद्यद्राष्ट्रसभा ब्रूयात्समतं राष्ट्रवर्धनम् ।
तत्र तत्र विरोधोऽभून्मुस्लीमानां हितावहः ॥ १६ ॥
अत्रान्तरे राज्ययन्त्रे नवीना घटना[४७] कृता ।
आंग्लै राष्ट्रप्रभेदाय याभवत्कलहाय च ॥ १७ ॥

हिन्दवो बहुसंख्याका मुस्लीमाश्चाल्पसंख्यकाः ।
तथापि मा भूदन्यायो मुस्लीमेष्विति हेतुना ॥ १८ ॥
बाहुल्यं संमतं तेषां सर्वराजसभासु वै ।
तथा नियोजनं चापि ह्यधिकारपदेष्विह ॥ १९ ॥
एवं कृतेऽप्यसंतोषो मुस्लीमैर्बहु दर्शितः ।
यद्दत्तं गृह्यते ह्यादावधिकं प्रार्थ्यते ततः ॥ २० ॥
असंतुष्टाः सदाप्येव राष्ट्रे दोषैकदृष्टयः ।
सर्वैर्विरोधं कुर्वन्ति भाषन्ते स्वार्थहेतुना ॥ २१ ॥
न राज्यकर्तृभिस्तेषां सहकारः कथंचन ।
नापि राष्ट्रसभायोगो माहात्म्यं स्वस्य संमतम् ॥ २२ ॥
लोकप्रतिनिधित्वेन मन्त्रिणः प्रान्तशासने ।
नियोक्तव्या इति मतं घटनायां पुरस्कृतम् ॥ २३ ॥
राष्ट्रियास्तदुरीकृत्य गान्धिना प्रेरिताः स्वयम् ।
प्रान्ते प्रान्ते मन्त्रिपदे नियुक्ता अभवन्किल ॥ २४ ॥
यथान्यायं लोकहिते तत्पराः सर्व एव हि ।
स्वकर्तव्ये प्रसक्तास्ते दृश्यन्ते लोकनायकाः ॥ २५ ॥
मुस्लीमास्तेष्वपि ह्यासन्राष्ट्रिया बुद्धिमत्तरा ।
किं तु जीनाप्रभृतयः संतोष तत्र नाप्नुवन् ॥ २६ ॥
गान्धी राष्ट्रसभा चापि हिन्दूनां हितकारिणी ।
मुस्लीमानां कष्टतमं जीवनं जायतेऽधुना ॥ २७ ॥
स्वधर्माचरणेऽप्येषां विरुद्धा हिन्दुमन्त्रिणः ।
अन्यायस्य परा सीमाप्येपेत्युद्घोषयन्ति ते ॥ २८ ॥
स्वतोऽप्यकिंचित्कुर्वाणास्तत्परा दोषदर्शने ।
महत्त्वमाप्नुवभूमावांग्लेभ्यो राजकारणे ॥ २९ ॥
॥ इति श्रीगान्धीगीतायां मुस्लीमविरोधयोगो नाम
एकोनविंशोऽध्याय. ॥ १९ ॥

---

# अथ विंशोऽध्यायः ।

संजय उवाच ।

अत्रान्तरे युरोपीयैः[४८] प्रस्तुतं भीषणं रणम् ।
शर्मण्यैः सह संयोद्धुं सज्जा आंग्लादयोऽभवन् ॥ १ ॥
नेता हिटलराख्योऽसौ शार्मण्यानां प्रतापवान् ।
कलहाय समुद्युक्तो न बिभेति कुतश्चन ॥ २ ॥
प्रथमे तु महायुद्धे शार्मण्याः सुपराजिताः ।
नापश्यञ्शरणं कंचित्तेभ्यः सर्वं हृतं परैः ॥ ३ ॥
ततः प्रभृति राष्ट्रस्य पुनरुद्धारहेतुना ।
यतितं बहुभिस्तेषु हिट्लरोऽभवदग्रणीः ॥ ४ ॥
निर्मिता युद्धकुशलाः स्वकीयास्तेन सर्वतः ।
वैभवं सर्वमप्येवं प्राप्स्याम इति निश्चयात् ॥ ५ ॥
बलं बलवतां चापि वर्धते सुतरां दृढम् ।
इति चेतसि मन्वानो नेता साहसिकोऽभवत् ॥ ६ ॥
आक्रान्ता इतरे देशाः शार्मण्यैः क्रमशस्तदा ।
कलहो मास्तु कुत्रापीत्याग्लैर्यत्नो महान्कृतः ॥ ७ ॥
यदा त्वभ्यधिका तृष्णा तथोन्मादोऽप्यदृश्यत ।
मुसोलिनीहिट्लरयोर्मैत्री चापि दृढा कृता ॥ ८ ॥
यदा रूसेन संगम्य पोलंडीयाः पराजिताः ।
आंग्लशार्मण्ययोरेव युद्धमुद्घोषित तदा ॥ ९ ॥
आंग्लानां पक्षपातेन हॉलण्डफ्रान्सबेल्जमाः ।
सर्वे शत्रुविरोधाय युद्धभूमौ समागताः ॥ १० ॥
एवं प्रवर्तितं युद्धमन्येषामपि तापदम् ।
विश्वमप्यचिरात्तेन व्याप्तं नास्त्यत्र संशयः ॥ ११ ॥
आंग्लानां भारते राज्य तेषामेव हिताय तत् ।

राजप्रतिनिधिश्चापि तेषामादेशकार्यसौ ॥ १२ ॥
तेन चैषां मतं ज्ञात्वा स्वीकृता युद्धघोषणा ।
देशे सर्वत्र संपाद्य युद्धोपकरणानि च ॥ १३ ॥
युद्धाय प्रेषितास्तेन सैनिकाश्च सहस्रशः ।
आहूताः सर्वतो राष्ट्रे युद्धायैव ततोऽधिकाः ॥ १४ ॥
आदौ लोकमतं ज्ञात्वा पश्चाद्युद्धस्य घोषणम् ।
तद्विरुद्धं प्रतिनिधिर्वर्तते तन्न संगतम् ॥ १५ ॥
युरोपीयेषु यद्युद्धं संबंधस्तत्र को हि नः ।
जीवहानिर्वृथैवैषा मास्त्वशान्तिर्भयावहा ॥ १६ ॥
इति राष्ट्रसभायां यद्धुरीणैः सुविचारितम् ।
महात्मनापि तत्सर्वं स्वीकृतं हितबुद्धिना ॥ १७ ॥
स्वकीयानां घात एव युद्धेनात्र भविष्यति ।
तन्मास्तु शासनपदमित्यादिष्टं महात्मना ॥ १८ ॥
सद्यस्तदनुरोधेन ये त्वासंल्लोकमन्त्रिणः[५१] ।
स्वपदं तैः परित्यक्तमांग्ला भीतास्तथापि न ॥ १९ ॥
साहाय्यार्थं स्वकीयानां प्रयतन्ते यथाक्रमम् ।
युद्धोपकरणानीह चोत्पाद्यन्ते सहस्रशः ॥ २० ॥
यद्यप्यसंतोषपरा भाषा यांग्लविरोधिनी ।
मुस्लीमानां तथाप्यासीत्साह्यं युद्धाय सर्वतः ॥ २१ ॥
तथैव राष्ट्रे सर्वत्र दरिद्राश्च कुटुम्बिनः ।
आसंस्तेऽप्युदरार्थाय युद्धसाह्यं प्रकुर्वते ॥ २२ ॥
तावच्छार्मण्यदेशीयैराक्रान्तं शात्रवं बलम् ।
विश्वजेता हिटलरो वशे सर्वान्करोति ह ॥ २३ ॥
पूर्वसागरभागेऽपि जपानीया जिगीषवः ।
जित्वा द्वीपानि बहुशो देशांश्चापि ततोऽजयन् ॥ २४ ॥

तत्रत्या ये युरोपीया न पर्याप्ता बलेन ते ।
तस्मात्प्रपूर्वदिग्भागो जपानीयैर्वशीकृतः ॥ २५ ॥
आक्रान्तो ब्रह्मदेशस्तैर्भारतं धर्षयन्ति ते ।
भीताश्चांग्लास्ततो यत्नं स्वयं कर्तुं समुद्यताः ॥ २६ ॥
प्रेषितः[५२] क्रिप्स्महाभागः प्रशमाय हिताय च ।
राष्ट्रियास्तेन नेतार आहूता भारते तदा ॥ २७ ॥
स्वातन्त्र्यं च स्वराज्यं च दास्यतेऽप्यचिरात्किल ।
युद्धसाह्योद्यतैरादौ संपाद्यो विजयो महान् ॥ २८ ॥
इदं स्वीकार्यमद्यैव यतमानैश्च नेतृभिः ।
इति प्रतिनिधेर्वाक्यं विचाराय प्रवर्तितम् ॥ २९ ॥
राष्ट्रियाश्च वदन्त्येव ह्यांग्ला मिथ्याप्रवादिनः ।
जपानभीत्येदं सर्वं प्रस्तुतं न तु संगतम् ॥ ३० ॥
वदन्ति मधुरा वाचमस्यामापदि यद्यपि ।
विश्वासो नैव कर्तव्यो न सुखाय कदाचन ॥ ३१ ॥
अस्मिन्स्वातन्त्र्यदानेऽपि बीजं भेदस्य धिष्ठितम् ।
कलहो येन राष्ट्रे स्यादस्वास्थ्यमपि सर्वदा ॥ ३२ ॥
इत्येवं प्रवदद्भिस्तैः क्रिप्स्वाक्यं धिक्कृतं तदा ।
आंग्ला अपि महाधूर्ता निराशा नाभवन्कचित् ॥ ३३ ॥
अमेरिकासभाध्यक्षो रूझवेल्टेति विश्रुत. ।
स तेषां वशगो भूत्वा साहाय्यं कुरुते रणे ॥ ३४ ॥
तथैव रूसशार्मण्यावुभावपि वियोजितौ ।
उभयोर्दारुणं युद्धं प्रावर्तत जिगीषया ॥ ३५ ॥
तेन रूसस्य साहाय्यमांग्लानामभवत्तदा ।
शार्मण्याः सर्वतो ग्रस्ताः कर्तव्या इति निश्चयात् ॥ ३६ ॥
एवं जयाशा युध्यद्भिरांग्लैर्दृष्टा यदा शुभा ।

भारतीयास्तदैवैभिः सर्वत्राप्यवहेलिताः ॥ ३७ ॥
उद्‌घोषयन्ति सर्वत्र स्वकीयं न्यायपालनम् ।
तदेवान्यायसंपूर्णमेवमासीत्सुदारुणम् ॥ ३८ ॥
संतापितो महात्मापि मार्गं युक्तं परीप्सति ।
अहो दम्भश्च दर्पश्च शासकानामितीरयन् ॥ ३९ ॥
यद्यस्माकं सुखायैव यत्नं कुर्वन्त्यतन्द्रिताः ।
तत्कथं न वयं शक्ता अद्यापि स्वत्वरक्षणे ॥ ४० ॥
तदलं सर्वथा ह्येषामुपकारो भयावहः ।
गच्छन्तु सर्वे त्वरिताः स्वदेशायैव सांप्रतम् ॥ ४१ ॥
मुस्लीमा यदि गृह्णीरन्राज्ययन्त्रं स्वतस्तदा ।
मास्त्वांग्लानां तत्र चिन्ता लोकरक्षणवादिनाम् ॥ ४२ ॥
प्रियमस्माकमेकं यत्त्याज्यं राज्यं विदेशजैः ।
यद्भावि तद्भवतु नः सर्वं सोढुं वयं क्षमाः ॥ ४३ ॥
राष्ट्रियाश्चापि मिलिता मुम्बापुर्यामनेकशः[५४] ।
महात्मनो वचांसीह संमतानीति तेऽब्रुवन् ॥ ४४ ॥
'करेंगे या मरेंगे' इत्यभिमन्त्र्य स्वकैः सह ।
यावत्प्रचलितः स्थानात्तावदेव निरोधितः ॥ ४५ ॥
देशे सर्वेऽपि नेतारो राजदूतैः समुद्यतैः ।
अज्ञाता एव लोकस्य कारागारे वशीकृताः ॥ ४६ ॥
तेन सर्वत्र लोकस्य संक्षोभो जनितो महान् ।
राज्ययन्त्रविरोधाय बहवश्च सुमज्जिताः ॥ ४७ ॥
तेषां दण्डप्रशमने तत्परा राजसेवकाः ।
सर्वमल्पेन कालेन शमितं प्रसभं हठात् ॥ ४८ ॥
महात्मा संनिरुद्धोऽपि नैव शान्तः कथंचन ।
तत्र दैववशात्तस्य भार्या[५५] साध्वी मृता तदा ॥ ४९ ॥

सर्वदा सर्वकार्येषु सा पत्युः सहचारिणी ।
मातेव राष्ट्रे सर्वत्र संमता वंदिता जनैः ॥ ५० ॥
पत्नीनिधनयोगेन सोऽधिकं व्यथितोऽभवत् ।
लोका अप्यनुशोचन्ति दृष्ट्वावस्थां दुरावहाम् ॥ ५१ ॥
॥ इति श्रीगान्धीगीतायां बन्धनयोगो नाम विंशोऽध्यायः ॥ २० ॥

---

## अथ एकविंशोऽध्यायः ।

संजय उवाच ।

अत्रान्तरे सुबह्वीषु देशे लोकसभासु च ।
कारावासो महात्मादिराष्ट्रियाणां निषेधित. ॥ १ ॥
राष्ट्रियैरेव लोकानां सक्षोभो जनितो भृशम् ।
इतीरितो वृथारोपो नेतृष्वेतै॑ प्रशासकैः ॥ २ ॥
तत्रापि प्रत्ययो नास्ति सर्वं द्वेषकृतं परम् ।
राजप्रतिनिधिश्चापि सम्यगुक्तः समञ्जसैः ॥ ३ ॥
ततो दीर्घेण कालेन मुक्तो निगडबन्धनात् ।
महात्मा राष्ट्रकार्यार्थं ससिद्धः पुनरेव च ॥ ४ ॥
मुस्लीमानां विरोधेनैवांग्ला उत्तेजिता बहु ।
तत्रापि यतितं तेन सर्वं जातं वृथैव तत् ॥ ५ ॥
जिनाप्रभृतयस्तत्र नैव शृण्वन्ति तद्वचः ।
राष्ट्रभेदाय संसिद्धा॑ स्वमतं न त्यजन्ति ते ॥ ६ ॥
मुस्लीमानां हितार्थाय पाकिस्तानस्य निर्मितिः ।
इत्याग्रहोऽपि बलवान्स्वीकृतश्च जिनादिभिः ॥ ७ ॥
एवं तेषां राज्यतृष्णा वर्धते सा दिने दिने ।
विरोधस्तत्र सुस्पष्टो राष्ट्रियाणां समञ्जसः ॥ ८ ॥

हिमशैलात्सागरान्तमखण्डं सृष्टिनिर्मितम् ।
विस्तीर्णं भारतं वर्षमेकात्म्यमपि तत्र हि ॥ ९ ॥
विभज्यते यदि त्वेतत्तन्न लोकहितावहम् ।
सर्वे विभिन्नधर्मीयास्तिष्ठन्त्वेकत्र भारते ॥ १० ॥
इति वादो राष्ट्रियाणां धूर्तैरांग्लैरनेकशः ।
मुस्लीमान्कारण कृत्वा सर्वदैव निराकृतः ॥ ११ ॥
एवं विवदमानेषु राज्ययन्त्रप्रचालने ।
साह्यं कुर्वन्ति नो लोकास्तदांग्लैः स्ववशे कृतम् ॥ १२ ॥
यत्र यत्र च नेतारो विरुध्यन्ते प्रशासकैः ।
तत्र घोरतमो दण्डो लोकेषु स्यात्सुनिश्चितः ॥ १३ ॥
समस्ते भारते वर्षे धनधान्यसमृद्धिमान् ।
वङ्गदेशः सुविख्यातस्तत्रैवापतिता विपत् ॥ १४ ॥
अवर्षणात्सस्यहानिर्धान्याभावाद् बुभुक्षुता ।
अनेकशतसाहस्रा जना मृत्युवशं गताः ॥ १५ ॥
तत्रत्या लोकनेतारः सुभापाद्या अनेकशः ।
दण्ड्याः सर्वाः प्रजाश्चेति शास्तॄणां मतमुत्तमम् ॥ १६ ।
तस्मात्तदनुसारेण प्रजानाश उपेक्षितः ।
राज्यकर्तृभिरप्येवं दण्ड्यन्ते भारते जनाः ॥ १७ ॥
युद्धेऽपि यावत्सजातं मैत्रं रूमाग्लयोर्दृढम् ।
तावत्सर्वत्र दृश्यन्ते शार्मण्याना पराभवः ॥ १८ ॥
अणुप्रहरणास्त्रेण जपानीया निपातिता. ।
भीत्याक्रान्तं जगच्चापि मूढं युक्तविचारणे ॥ १९ ॥
तदैव रूसैः संगत्य चाक्रान्ता. सर्वतोदिशः ।
शार्मण्यास्त्यक्तजीवाशाः शरणं प्रतिपेदिरे ॥ २० ॥
नष्टो हिटलरश्चापि नष्टा अनुचरास्तथा ।

वृथा विश्वजिगीषापि नष्टा स्मृतिपथं गता ॥ २१ ॥
द्वितीयेऽपि महायुद्धे यशो लब्ध्वैवमन्वत ।
आंग्ला माहात्म्यकं स्वीयं प्रतिष्ठामपि चान्वधन् ॥ २२ ॥
किं तु राष्ट्रबलं तेषां प्रायो विकलतां गतम् ।
दूरैव वार्ता पूर्वस्य वैभवस्य तदाभवत् ॥ २३ ॥
धान्यं नास्ति धनं नास्ति नास्ति स्वास्थ्यं च कस्यचित् ।
तथाप्यांग्लैर्धैर्यशीलैः सोढं सर्वं मुदा महत् ॥ २४ ॥
ऋणमांग्लकदेश्यानामांग्लैर्देयं तथाऽक्रतम् ।
उभयोः सगतं तेन महत्त्वं चाभवत्तदा ॥ २५ ॥
युद्धोत्तरव्यवस्थायां जिनराष्ट्रस्य सग्रहः ।
तथैव लघुराष्ट्राणामैक्येन बलवर्धनम् ॥ २६ ॥
इमं विषयमुद्दिश्य विचाराय प्रवर्तिता ।
यदा मिलित्वा जेनारम्नदा द्वैधं प्रदर्शयन् ॥ २७ ॥
आंग्लाग्रकविरोधाय गान्धी स्मृताः स्वकैः सह ।
युरोपीयेषु पर्वत्या ह्यामन्त्रमानुयायिनः ॥ २८ ॥
दृष्ट्वैवं च समुत्पन्नं सघर्षं राष्ट्रनेतृषु ।
पुनर्युद्धस्य विषये संजातः संशयो महान् ॥ २९ ॥
आस्तां परेषां वार्तेयं किं जातं भारते पुनः ।
तदेवात्र प्रपश्यामोऽभिप्रेतं तद्धि सांप्रतम् ॥ ३० ॥
राष्ट्रिया बन्धने युक्तास्तावदेव जिनादयः ।
प्रयत्नं कृतवन्तस्ते संगन्तुं राज्यकर्तृभिः ॥ ३१ ॥
नियोज्या मुस्लिमाः सर्वे वयं मन्त्रिपदेष्विह ।
साहाय्यं कर्तुमिच्छामो राज्यशासनकर्मणि ॥ ३२ ॥
तथापि राष्ट्रियांस्त्यक्त्वा केवलैर्मुस्लिमैः सह ।
दुष्करं कार्यमित्येव मतमांग्लैः प्रदर्शितम् ॥ ३३ ॥

तेनाधिकतरो रोषो मुस्लीमानां च हिन्दुषु ।
घाताय सर्वथा युक्ता राष्ट्रकार्यस्य ते तदा ॥ ३४ ॥
यदा तु राष्ट्रियाः सर्वे विमुक्ता गान्धिना सह ।
तदैव मुस्लिमैरैक्यं कर्तुं यत्नो महान्कृतः ॥ ३५ ॥
न हितं श्रुतवन्तस्ते वयं श्रेष्ठाः पराक्रमे ।
मुस्लीमानां च साम्राज्यमिष्टं न इति वादिनः ॥ ३६ ॥
यत्रैषां बहुसंख्यत्वं तत्र युक्तं स्वशासनम् ।
यत्राल्पसंख्यास्तत्रापि तेषामेव हिताय तत् ॥ ३७ ॥
एवं किमप्ययुक्तं तन्न मतं कस्यचिद्भवेत् ।
तथाप्युत्तेजिता धूर्ता राष्ट्रियैरैक्यवादिभिः ॥ ३८ ॥
अधिकाधिकमिच्छन्ति स्वातन्त्र्यं राज्यकर्मसु ।
स्वहिताय सदोद्युक्ताः परघाताय चोद्यताः ॥ ३९ ॥
एवं वैषम्यमस्वास्थ्यं राष्ट्रे तैः संप्रवर्तितम् ।
न शान्तिर्हृदये चासीत्कस्यापि सुखकारिणी ॥ ४० ॥
तथाप्यांग्लप्रतिनिधिः कथंचिद्राष्ट्रियैः सह ।
राज्यव्यवस्थामकरोन्मुस्लीमानां हिताय या ॥ ४१ ॥
अखण्डं भारतं वर्षं तिष्ठत्विति मनीषया ।
सर्वं तत्स्वीकृतं यद्यप्यन्याय्यं लोकशासनम् ॥ ४२ ॥
मुस्लीमानां राष्ट्रियाणां समा संख्या हि मन्त्रिषु ।
तथा तेष्वन्यपक्षीयाः समाविष्टाश्च केचन ॥ ४३ ॥
तथापि नैव संतोषो जिनादीनां कथंचन ।
तत्पक्षीया निरुन्धन्ति सर्वकार्येषु सर्वदा ॥ ४४ ॥
पाकिस्तानस्य संप्राप्ती राष्ट्रे सर्वत्र खण्डशः ।
इत्येव तेषामुद्घोषः स्वातन्त्र्ये चैव शासने ॥ ४५ ॥
यावन्न प्राप्यतेऽस्माकमुद्दिष्टं राष्ट्रखण्डनम् ।

"प्रतिकुर्मस्तावदेव सभासु प्रवदन्ति ते ॥ ४६ ॥
तत्रापि तेषां कौटिल्यं सुस्पष्टं दृश्यते जनैः ।
तदेवात्महितार्थाय शासकैरुपयुज्यते ॥ ४७ ॥
एषां वाम्राज्यकर्तृणां विरुद्धा नो कृतिस्तथा ।
हिन्दूनामेव नाशार्थं यतन्ते सर्वदा हि ते ॥ ४८ ॥
तथाचिराच्च मुस्लीमैर्हत्याकाण्डं प्रवर्तितम् ।
वङ्गेषु प्रथम यत्र तेषामेवानुशासनम् ॥ ४९ ॥
राजधान्यां तथान्यत्र ग्रामेषु नगरेषु च ।
हिन्दूनां क्रियते हिंसा सर्वस्वहरणं तथा ॥ ५० ॥
स्त्रीणां विडम्बनं तासामुपभोगो बलात्कृतः ।
तथा धर्मान्तरं चापि सीमा क्रौर्यस्य या परा ॥ ५१ ॥
निर्दयैस्तत्र हन्यन्ते बालवृद्धातुरा अपि ।
गृहाणि चैव दह्यन्ते ह्रियतेऽपि धनं बहु ॥ ५२ ॥
मुस्लीमा मन्त्रिणो वङ्गे शासका अनुचारिणः ।
सर्वत्र निभृतं प्रान्ते यथाकाम चरन्ति ते ॥ ५३ ॥
तथैवान्यप्रदेशेषु घातिता हिन्दवो बहु ।
प्रतिकारस्तु तत्रापि निरुद्धो राज्यशासकैः ॥ ५४ ॥
व्यथितोऽभून्महात्मासौ दृष्ट्वा हत्या सुदारुणाम् ।
प्रार्थिता लोकनेतारो मैवमित्यभिभाषिणा ॥ ५५ ॥
यदा त्वांग्ले. स्वदेशेऽपि श्रुत वृत्तं सविस्तरम् ।
तदा राजप्रतिनिधिर्निन्दितो बहुशो जनै. ॥ ५६ ॥
गतः स्वदेशं वेव्हेलंस्तदन्य· स्थानभाक् कृतः ।
मांटबाटन नामासौ राज्ञश्चाप्तस्तथा सुधीः ॥ ५७ ॥

॥ इति श्रीगान्धीगीतायां मुस्लीमाभियोगो नामैकाविंशोध्याय: ॥ २१ ॥

# अथ द्वाविंशोऽध्यायः ।

धृतराष्ट्र उवाच ।

मुस्लीमानामेव पुरा साम्राज्यं भारते ह्यभूत् ।
स्थापिता हिन्दवस्तैश्च दासभावे वशीकृताः ॥ १ ॥
तथापि ते यथाकालं प्रतिकाराय तत्पराः ।
मुस्लीमांश्च पराभूय स्वातन्त्र्यं पुनराप्नुवन् ॥ २ ॥
राजपूता मध्यदेशे महाराष्ट्रेऽपि हिन्दवः ।
सर्वत्र भारते वर्षे दृश्यन्ते युद्धतत्पराः ॥ ३ ॥
सर्वेष्वेतेषु चतुरैरांग्लैः संपाद्य शासनम् ।
समग्रं भारतं वर्षमचिरात्स्ववशे कृतम् ॥ ४ ॥
यदद्य भारतस्यापि स्वातन्त्र्यं दातुमुद्यताः ।
तदौदार्यं किलांग्लानां स्तुतिमर्हन्ति तत्र ते ॥ ५ ॥

संजय उवाच ।

तत्रैव स्थिरमात्मीयं शासनं वै चिकीर्षवः ।
मिथो भेदं च कलहं यत्नतः प्रेरयन्ति ते ॥ ६ ॥
कुटिला नीतिरप्येषा भारतेऽभूद्यशस्विनी ।
आंग्लानां शासनं सर्वैर्भारतीयैः सुसंमतम् ॥ ७ ॥
यद्राष्ट्रीयैर्विरोधाय मुस्लीमा सततोत्थिता ।
राष्ट्रस्य खण्डने सक्तास्तदप्यांग्लस्य कारितम् ॥ ८ ॥
तस्यैव परिपाकोऽय यद्धिन्दूनां विहिंसका ।
मुस्लीमाश्च परां कोटिं क्रूरताया गता इह ॥ ९ ॥
न युक्तिवादं शृण्वन्ति पाकिस्तानजिगीषवः ।
धर्मभूमिरियं तैश्च सर्वथा विकलीकृता ॥ १० ॥
सर्वेषां सम्मतं पूर्वं मोतीलालजिनादिभिः ।
यत्प्रस्तुतं देशकार्यं तदिदानीं सुविस्मृतम् ॥ ११ ॥

पाकिस्तानं विना शान्तिर्देशे नैव भवेत्कचित् ।
वदन्ति प्रकटं लोके मुस्लीमास्ते जिनादयः ॥ १२ ॥
आंग्लानां प्रमुखास्तेन विचाराय प्रवर्तिताः ।
पुनरागत्य देशेऽत्र धुरीणैः संलपन्ति च ॥ १३ ॥
राष्ट्रस्य त्रिविधाः खण्डा करणीया प्रयत्नतः ।
इति संप्राप्तमत्रैव परमं संकटं तदा ॥ १४ ॥
मुस्लीमानां हितार्थाय पाकिस्तानस्य निर्मितिः ।
यत्रैषां बहुसंख्यत्वं तत्र राष्ट्रस्य खण्डनम् ॥ १५ ॥
तथैवानेकसामन्तास्तत्र तत्र प्रशासकाः ।
तेषामपि यथाकामं स्वातन्त्र्यं स्वयमागतम ॥ १६ ॥
शिष्टो भागो राष्ट्रियाणां तत्राप्यैक्य न कुत्रचित् ।
तत्रत्या मुस्लीमा. प्रायो जिनादीननुसारिणः ॥ १७ ॥
एवं चेयं मातृभूमिर्बहुधा शकलीकृता ।
संतोषाय न कस्यापि तैराग्लैर्घटकैर्विना ॥ १८ ॥
स्वातन्त्र्यं तादृश राष्ट्रे यत्प्राप्तमनया धिया ।
अन्यां गतिमपश्यद्भि. कथंचिदपि समतम् ॥ १९ ॥

॥ इति श्रीगान्धीगीतायां राष्ट्रखण्डनयोगो नाम द्वाविंशोऽध्यायः ॥ २२ ॥

---

## अथ त्रयोविंशोऽध्यायः ।

संजय उवाच ।

कलहो मास्तु शान्तिः स्याद्राष्ट्रे इत्येव हेतुना ।
यत्स्वीकृतं राष्ट्रियैस्तदनर्थायैव भावितम ॥ १ ॥
महात्मनः संमता ये हिन्दराष्ट्रस्य मंत्रिणः ।
साम्येन सर्वं पश्यन्तो न च्युता स्वीकृताद्व्रतात् ॥ २ ॥

आंग्ल एवास्तु हिन्दस्य कंचित्कालं प्रशासकः ।
इति हेतोः प्राक्तनोऽसौ बाटनः संनियोजितः ॥ ३ ॥
सर्वतन्त्रस्वतन्त्रश्च पाकिस्तानप्रशासकः ।
जिनाभवत्तमेवासन्ननुकूलाश्च मन्त्रिणः ॥ ४ ॥
साम्यं सर्वत्र पाकेऽत्र पक्षपातो न कस्यचित् ।
मुखेनैवं वदन्त्येते कृतिस्तु सुविरोधिनी ॥ ५ ॥
हिन्दूनां त्रासजननं भवत्येषां प्रशासनम् ।
अचिरादेव नाशाय तेषां तत्कल्पितं हठात् ॥ ६ ॥
हिन्दवः स्वल्पसंख्यास्ते पीडिताः सर्वथाचिरात् ।
नापश्यञ्शरणं कंचित्स्थातुं शक्ता न तत्र वै ॥ ७ ॥
आदौ वङ्गेषु या हिंसा ततोऽपि भयकारिणी ।
हिंसा प्रवृत्ता पंजाबे घातिताश्चैव लक्षशः ॥ ८ ॥
कुटुंबीया हता बाला वृद्धा नष्टं धनं तथा ।
गृहाण्यपि प्रदग्धानि मानव्यं नष्टमेव च ॥ ९ ॥
सर्वे त्यक्त्वा प्रधावन्ति प्राणत्राणपरायणाः ।
हिन्दवस्तेऽपि वध्यन्ते मार्गे मुस्लीमबान्धवैः ॥ १० ॥
शीखानामपि सर्वत्र विध्वंसः सुमहान्कृतः ।
पूजास्थानानि धर्म्याणि ध्वस्तानि सुबहूनि च ॥ ११ ॥
सिन्धुदेशेऽप्येवमेव हिन्दूनां कृपणा स्थितिः ।
निर्वासिताः पलायन्ते हिन्दभूमिं सहस्रशः ॥ १२ ॥
हिन्दराष्ट्रेऽपि मुस्लीमाः पाकिस्तानहितैषिणः ।
उद्युक्ता राष्ट्रघाताय न ज्ञातं कपटं तदा ॥ १३ ॥
तैरेव नानाशस्त्राणि युद्धोपकरणानि च ।
सुगूढं प्रेषितानीह बाह्यतः प्रीतिदर्शकैः ॥ १४ ॥
राष्ट्रे सर्वत्र मुस्लीमाः सुखेन विचरन्ति ते ।

न केऽपि तैर्विरुध्यन्ते स्वकीयत्वेन संमतैः ॥ १५ ॥
पाकिस्ताने तु सर्वत्र भीषिता हिन्दवस्तदा ।
निःसारिताः स्वतः सर्वे मुस्लीमैर्बलवत्तरैः ॥ १६ ॥
एव सत्यपि सर्वत्र पाकिस्तानप्रशामकाः ।
हिन्दून्शीखान्दूषयन्ति बन्धूनां हिंमका इति ॥ १७ ॥
महत्यापतिता राष्ट्रे संकटानां परंपरा ।
महात्माप्यवदद्धा! धिक् कष्टं ! स्वातन्त्र्यमीदृशम् ॥१८॥
तथाप्यहिंसा न त्याज्या धर्मस्तत्र प्रतिष्ठितः ।
उपादिशति तानेवं ये ह्यस्य मतमानिनः ॥ १९ ॥
प्रतिकारो न हिंसाया हिंसया युज्यते त्विह ।
हिंसापराणां म्लेच्छानां प्रेम्णैव हृदय जयेत् ॥ २० ॥
अक्रोधेन जयेत्क्रोधमिति धर्मानुशासनम ।
तदेव पाल्यमस्माभिः प्रणीतमृषिभि· पुरा ॥ २१ ॥
महात्मनो वच इदं प्राकृतानां न तुष्टये ।
कृते प्रतिकृतं त्वेव तेषां बहुमत तदा ॥ २२ ॥
तथापि लोकशान्त्यर्थं महात्मा यततेऽनिशम ।
ग्रामाद् ग्रामं स गत्वैव लोकान्सबोधयत्यपि ॥ २३ ॥
शीखादयस्तु मुस्लीमैः पाकिस्तानान्निराकृताः ।
संतापितास्तदागच्छन्हिन्दभूमिं प्रयत्नतः ॥ २४ ॥
वदन्ति प्रकटं वध्या मुस्लीमा हिन्दवासिनः ।
हतास्तदीयैराप्ता नो हृतं सर्वस्वमेव च ॥ २५ ॥
वदन्मृदु महात्मा तु संसान्त्वयति तानपि ।
भवतां महती हानिरिति शोचामि वै भृशम् ॥ २६ ॥
अत्रत्यान्मुस्लिमान्हत्वा निष्कृतिर्न भवेद्यत. ।
अतः शान्ति समाश्रित्य युक्त प्राप्तस्य सेवनम् ॥ २७ ॥

इत्येवमादिभिर्वाक्यैर्लोकेषु शममिच्छति ।
तन्मतेनैव वर्तन्ते हिन्दभूमेः प्रशासकाः ॥ २८ ॥
महान्तं यत्नमास्थाय मुस्लीमास्तैश्च रक्षिताः ।
तथा प्रशमिता देशे हिन्दुशीखादयो जनाः ॥ २९ ॥
तथापि पाकिस्तानीयाः सर्वदा कलहप्रियाः ।
यत्किंचित्कारणं कृत्वा विरोधाय सदोद्यताः ॥ ३० ॥
मिथ्याप्रलापैर्हिन्दूनां पीडायै च कृतोद्यमाः ।
महात्मापि न पर्याप्तो मुस्लीमानां प्रशान्तये ॥ ३१ ॥
तैः प्रेरिता वायवीयाः क्रूरा हूर्णाः सहस्रशः ।
काश्मीरदेशमाक्रम्य पीडयन्ति भृशं प्रजाः ॥ ३२ ॥
तत्र यद्यपि मुस्लीमबाहुल्यं शासको नृपः ।
हिन्दूरेवेत्यसंतुष्टास्तत्रत्या अपि केचन ॥ ३३ ॥
संगत्य तैश्च पाकीया हूणसाह्यमवाप्नुवन् ।
दाहयन्ति बहून्ग्रामान्घातयन्ति जनानपि ॥ ३४ ॥
मुस्लीमेष्वेव संघर्षस्तत्र तत्र महानभूत् ।
भीषितश्च तदा राजा साह्यार्थं प्रार्थयत्स्वकान् ॥ ३५ ॥
आगताः सैनिकाश्चापि हिन्दराष्ट्रात्सहस्रशः ।
काश्मीररक्षणार्थाय हूणनिःसारणाय च ॥ ३६ ॥
तथापि हूणान्पाकीया युद्धोपकरणादिभिः ।
साह्यं कुर्वन्ति तेनैते पराजेतुं सुदुःशकाः ॥ ३७ ॥
पाकिस्ताने समावेशः काश्मीरस्य सदोचितः ।
जिनादीनां मतं तेन संघर्षोऽयं महान्कृतः ॥ ३८ ॥
यत्र यत्र हि मुस्लीमा भवेयुस्तत्र तत्र च ।
पाकिस्तानस्य भागः स कार्यः सर्वप्रयत्नतः ॥ ३९ ॥
इत्येव नीतिमाश्रित्य भेदः सर्वत्र कारितः ।

मुस्लीमानां धुरीणैः स फलितो भारते यथा ॥ ४० ॥
तथा सौराष्ट्रदेशेऽपि जुनागडनृपः खलः ।
पाकीयैरेव संगत्य प्रजापीडार्थमुद्यतः ॥ ४१ ॥

हिन्दूनां तत्र बाहुल्यं तैर्विरोधः समाश्रितः ।
प्रजासंघर्षभीत्यैव नृपः पाकं पलायितः ॥ ४२ ॥
दक्षिणस्यामपि दिशि भांगानगरपालकः ।
स्वयं मुस्लीमधर्मीयः स्वकीयानां हिते रतः ॥ ४३ ॥
दिल्लीश्वरेण यः प्रान्ते नियुक्त सेवकः पुरा ।
स्वयमेवाभवद्राजा भागादेशं वशेऽकरोत् ॥ ४४ ॥
पश्चादांग्लैश्च संगत्य तेषां यत्संमतं प्रियम् ।
तदेव कुर्वन्ति सदा वंशजास्तस्य सांप्रतम् ॥ ४५ ॥
नष्टं दिल्लीपते राज्यं महाराष्ट्र तथा गतम् ।
अयं तु वर्धते धूर्तः कालमानं विचार्य च ॥ ४६ ॥

प्रायः प्रजा हिन्दव एव तस्य
तथापि राज्ये बहवस्तदीयाः ।
महत्पदे शासनकार्ययुक्ताः
कुर्वन्ति पीडा विविधाः प्रजासु ॥ ४७ ॥

यदा च भारतं वर्षं खण्डितं तदनेकधा ।
आंग्लैस्तदैव सामन्ताः स्वतन्त्रा इति घोषितम् ॥ ४८ ॥
तथापि बहवो भूपाः स्वप्रजामतवर्तिनः ।
हिन्दाग्रणीभिः संमन्त्र्य सर्वेषा तोषमाप्नुवन् ॥ ४९ ॥
निर्माय संघान्केषांचिदन्ये लीना महत्तरे ।
राष्ट्रे तेन बलं तेजो वर्धते लोकसौख्यदम् ॥ ५० ॥
एकरूपा प्रजाः सर्वा हिन्दराष्ट्रे समागता ।
मन्त्रिणोऽपि सदा तासां सुखायासश्च तत्पराः ॥ ५१ ॥

भागाराज्याधिपस्त्वत्र दीर्घं मन्त्रं स्वमन्त्रिभिः ।
कृत्वा हिन्देन प्राग्वत्त संबन्धं निश्चिकाय सः ॥ ५२ ॥
तत्रापि बहवः शंकाः प्रकल्प्य पुनरेव सः ।
स्वदूतान्प्रेषयत्येव वादार्थं हस्तिनापुरम् ॥ ५३ ॥
एवं कालापहरणं यावत्कुटिलकारितम् ।
तावत्प्रजापीडनाय तत्परा हस्तकाः सदा ॥ ५४ ॥
रझाकारा इति ख्याता हिन्दुनाशाय चोद्यताः ।
जीवितं धनमेतेषां स्त्रीपावित्र्यं हरन्ति ते ॥ ५५ ॥
तथा पाकप्रेरणया बलवृद्धिं चकार सः ।
युद्धोपकरणैः सर्वैः सिद्धां सेनां करोत्यसौ ॥ ५६ ॥
सर्वत्र भारते चारान्गूढं संप्रेष्य यत्नतः ।
उत्तेजयति मुस्लीमान्हिन्दराष्ट्रविनाशने ॥ ५७ ॥

धृतराष्ट्र उवाच ।

पाकीयानां दुष्कृतिभिर्यन्महात्मा न कोपितः ।
स्वकीयेष्वेव शान्त्यर्थं यतते तद्यथोचितम् ॥ ५८ ॥
सद्वृत्तिमेतां जानद्भिरांग्लै. पूर्वं सुतापितः ।
मुस्लीमानामेव राज्यं भारते कर्तुमुद्यतः ॥ ५९ ॥
स दृष्ट्वा बहुधा पीडामीदृशीं पाककारिताम् ।
ततः किमकरोत्तन्मे वद संजय पृच्छते ॥ ६० ॥

संजय उवाच ।

सौजन्यस्य परां कोटिं गतो लोकानुपादिशत् ।
स्वकीयानेव गान्धी तत्प्राकृतानां न संमतम् ॥ ६१ ॥
स्वेषां पाके कृता हानिस्तस्या इच्छन्ति निष्कृतिम् ।
अत्रत्यानां मुस्लिमानां पीडां कृत्वा कथंचन ॥ ६२ ॥
तेन व्याकुलितो गान्धी महात्मा स्वयमाचरत् ।

प्रायोपवेशनं स्वेषां शुध्यर्थं शान्तये तथा ॥ ६३ ॥
आदावेव स वार्धक्यात्क्षीणशक्तिर्विशेषतः ।
एतेन चलितुं स्थानान्न शक्नोति पदात्पदम् ॥ ६४ ॥
जीविते चास्य संजातः संशयो वै महांस्ततः ।
अस्येष्टमपि तत्कर्तुं नेतारः स्वयमुद्यताः ॥ ६५ ॥
पक्षपातो मुस्लिमेषु हिन्दुनाशाय सर्वथा ।
भवतीति मतं तत्र केषांचन विरोधिनाम् ॥ ६६ ॥
संतापिता ब्रुवन्त्येते गान्धी मुस्लीमपोषकः ।
तेषामेव प्रीतये सद्राष्ट्रमेतेन खण्डितम् ॥ ६७ ॥
तथापि नैव संतुष्टो मुस्लीमानां प्रियंकरः ।
सर्वस्यानर्थजातस्य कारण चास्य तन्मतम् ॥ ६८ ॥
तेष्वेवासन्नुग्रतराः केचनैवाततायिनः ।
प्रार्थनावसरे क्षिप्तस्तत्रैकेनाग्निगोलकः ॥ ६९ ॥
सहसैव निरुद्धोऽपि शासकैर्दण्डधारिभिः ।
उत्पन्नः संशयश्चास्य जीविते तु महात्मनः ॥ ७० ॥
ततस्तद्रक्षणार्थाय नियोज्या दण्डधारिणः ।
इत्यपि स्वीकृतं नैव मत स्वेषां महात्मना ॥ ७१ ॥
मदीयाः सर्व एवैते यद्यपि स्युर्विरोधकाः ।
न मे भीतिर्विचरतो वर्तते मनसि क्वचित् ॥ ७२ ॥
इति ब्रुवञ्जनान्सर्वास्तत्र संमिलितांश्च सः ।
उपादिशत्युनुदिन यद्राष्ट्रस्य हितावहम् ॥ ७३ ॥
तत्रैको जनसंमर्दे दुरात्मा घाततत्परः ।
आवर्तनलिकायन्त्रं गृहीत्वा समुस्थोऽभवत् ॥ ७४ ॥
आक्षिप्य गुलिकाश्चास्य देहे जर्जरिते तदा ।
प्राणैर्व्ययोजयच्चायम ज्ञात कैरपि क्वचित् ॥ ७५ ॥

क्षणादेवापतद् भूमौ ' हरे राम! ' इति ब्रुवन् ।
समदृष्टिः प्रशान्तात्मा सर्वभूतहिते रतः ॥ ७६ ॥
हिन्दुमुस्लीमसंघर्षो राष्ट्रखण्डनजो महान् ।
अपराधिषु तत्रापि क्षमाशीलेन भावनम् ॥ ७७ ॥
इति यन्मतमस्यासीत्तन्नागृह्णंश्च पामराः ।
पापीयस्तत्र एवैतद्यन्महात्मैव घातितः ॥ ७८ ॥
कृतार्थाः कारिताश्चांग्ला यै राष्ट्रं खण्डितं किल ।
उत्तेजिताश्च मुस्लीमा अस्वास्थ्यं सर्वतोऽभवत् ॥ ७९ ॥
गतो गान्धी महात्मासौ गीताप्यत्र समाप्यते ।
हा धिक् ! स्वकीयैरेवेयं राष्ट्रहानिः कथं कृता ॥ ८० ॥
सत्यस्य माहात्म्यमहिंसकेषु
यावन्न संस्थापितमत्र पूर्णम् ।
गीतापि तावद्धितकारिणीयं
सर्वप्रिया स्थास्यति भूतलेऽस्मिन् ॥ ८१ ॥
॥ इति श्रीगान्धीगीतायामापद्योगो नाम त्रयोविंशोऽध्यायः ॥

---

## अथ चतुर्विंशोऽध्यायः ।

धृतराष्ट्र उवाच ।
महात्मा निर्ममः सर्वाञ्शान्तिमेव समादिशत् ।
तस्येदं मरणं श्रुत्वा बहु शोचामि संजय ॥ १ ॥
ततः परं किमभवत्किमकुर्वंश्च मन्त्रिणः ।
आक्रान्तं हिन्दुराष्ट्रं वा मुस्लीमैस्तद्वदाधुना ॥ २ ॥
महात्मनो हि मरणे राष्ट्रे सर्वत्र विप्लवः ।
स मुस्लीमहितायैव भवेदिति सुनिश्चितम् ॥ ३ ॥

**संजय उवाच ।**

काश्मीरेषु महद्युद्धमादावेव प्रवर्तितम् ।
पाकीयैर्देश आक्रान्तः प्रजाश्च बहु पीडिताः ॥ ४ ॥
मुस्लीमा अपि तत्रत्या हताः पाकीयबान्धवैः ।
काश्मीररक्षण युद्धे कुर्वते हिन्दुसैनिकाः ॥ ५ ॥
[६३]पाश्चात्यराष्ट्रसंघोऽपि न्यायान्यायविवेचकः ।
ज्ञापितः सर्वमेवेदं वृत्तं हानिकरं महत् ॥ ६ ॥
तत्रत्यै. प्रमुखैः सम्यगाहूयोभयपक्षिणः ।
श्रुतं विस्तरतश्चापि काश्मीररणकारणम् ॥ ७ ॥
[६४]प्रत्यक्ष स्वयमागत्य दृष्टा चापि रणस्थितिः ।
युद्धाद्विरम्यतां सर्वैरित्यादिष्ट समञ्जमम् ॥ ८ ॥
तथापि नैव पाकीयाः शृण्वन्ति वचनं हितम् ।
यत्किंचित्कारण कृत्वा युद्धायैव समुद्यताः ॥ ९ ॥
तथा मुख्यापृतान्दृष्ट्वा हिन्दराष्ट्रप्रशासकान् ।
गान्धीवधेनाधिकं च सर्वथैव समाकुलान् ॥ १० ॥
मानी दृप्तः स्वतन्त्रोऽहमिति भागाधिपो ब्रुवन् ।
निजामोऽप्यधिका पीडां स्वप्रजाभ्यो ददाति ह ॥ ११ ॥
लोकच्छन्दानुसारेण भाव्यं वै राज्यशासनम् ।
इति ब्रुवाणा नेतारः कारागारेषु पातिता ॥ १२ ॥
हिन्दूना सर्वथा घात कर्तुमन्ये समुत्सुकाः ।
स्वैरं शस्त्राणि सगृह्य मुस्लीमा विचरन्त्युत ॥ १३ ॥
यन्निर्दयैः कृत वङ्गे पञ्जाबेऽन्यत्र कुत्रचित् ।
तदेव प्रकटं राज्ये क्रियतेऽप्यविरोधितम् ॥ १४ ॥
भ्रष्टा. स्त्रियो हता सपञ्जीवन कष्टमेव तत् ।
केचनैव कथंचिच हिन्ददेश समागताः ॥ १५ ॥

मन्त्रिणश्च सुसंमूढा मरणेन महात्मनः ।
त्राणार्थं प्रार्थिताश्चैतैर्निवेद्य नृपकारितम् ॥ १६ ॥
तथापि कलहो मा भून्मुस्लीमैरिति चिन्तया ।
क्षान्तं तैस्तद्यथापूर्वं निजामकृतपातकम् ॥ १७ ॥
स्वकीयानां तु रक्षार्थं गूढं चाराः प्रवर्तिताः ।
प्रान्ते प्रान्ते च सर्वत्र दण्डिनो दुष्टशासकाः ॥ १८ ॥
भागापरिसरे चापि नियुक्ताः सैनिकास्तथा ।
स्वप्रजारक्षणार्थाय सज्जाः सर्वत्र शस्त्रिणः ॥ १९ ॥
निजामोऽपि स्वयं दूतान्प्रेष्यासौ हस्तिनापुरम् ।
यावत्प्रकुरुते यत्नं बाह्यतो दीर्घकालिकम् ॥ २० ॥
तावदेव परेभ्योऽपि युद्धोपकरणानि सः ।
क्रीणाति गूढं दत्त्वैव धनं राष्ट्रजिगीषया ॥ २१ ॥
एवं संगत्य पाकीयैः पीडार्थं हिन्दवासिनाम् ।
सदैव यतते चासौ तेन शान्तिर्न कस्यचित् ॥ २२ ॥
महाराष्ट्रेऽपि च महाननर्थः समजायत ।
गान्धिनो मरणं यत्र निमित्तं तत्कृतं जनैः ॥ २३ ॥
ग्रामे ग्रामे वसन्ति स्म ब्राह्मणा व्यवसायिन ।
तेषां गृहाणि दग्धानि सर्वस्व नाशितं तथा ॥ २४ ॥
असहायाश्च ते सर्वे कारिता ब्राह्मणेतरैः ।
मत्सरग्रस्तहृदयैर्ग्रामीणैरेव बान्धवैः ॥ २५ ॥
राष्ट्रनेतृषु संवादः संभेदश्चाप्यजायत ।
तथा जनेषु संघर्ष. कारितो रूसवादिभिः ॥ २६ ॥
महार्घतापि वस्तूनामादौ युद्धनिमित्तजा ।
दिने दिने वर्धते सा जीवने दैन्यकारिणि ॥ २७ ॥
केवलं वणिजो लोके विपुलं धनमाप्नुवन् ।

न्यायान्यायमपश्यन्तः केवल स्वहिते रताः ॥ २८ ॥
नेहरूवल्लभादीनां खेरादीनां तथैव च ।
मन्त्रिणां महती चिन्ता कथं लोकः सुखी भवेत् ॥ २९ ॥
'अजातशत्रु'रित्यस्य बालगंगाधरस्य यत् ।
प्रथितं नाम तच्चाभूदन्वर्थकमपि प्रियम् ॥ ३० ॥
मोहमय्यां नियुक्तोऽसौ प्रधानामात्यपीठभाक् ।
यतते शान्तिसौख्यार्थं प्रजानां सतत सुधीः ॥ ३१ ॥
यद्राष्ट्रखण्डनं कृत्वा प्राप्तं स्वातन्त्र्यमीदृशम् ।
प्रथमे वत्सरे तत्राप्येवमापत्परंपरा ॥ ३२ ॥
पाश्चात्यानां भेदनीति. सर्वत्रानर्थकारिणी ।
तस्या एव प्रभावेन प्राच्यां लोका वशीकृताः ॥ ३३ ॥
अत्रापि भारते वर्षे तस्या एव फलं त्विदम् ।
मुस्लीमान्कारण कृत्वा हिन्दवो यत्र घातिताः ॥ ३४ ॥
उभयोरैक्यसिद्ध्यर्थमवतारो महात्मनः ।
मरणेन तु तस्याद्य राष्ट्रं व्याकुलितं बहु ॥ ३५ ॥
तथापि मन्त्रिणो धीरा नियुक्ता राष्ट्रपालने ।
स्वयं धैर्यं समालम्ब्य लोकान्सत्पथमादिशन् ॥ ३६ ॥
समञ्जसैर्विचारैश्च प्रेरिता हितकारिण. ।
अपसार्यापद. सर्वा महान्तस्तेजसा युताः ॥ ३७ ॥
काश्मीरे यच्च पाकीयैर्घोरं युद्धं प्रवर्तितम् ।
तत्र प्रजासाह्यकारी मुख्यमन्त्री नियोजितः ॥ ३८ ॥
हिन्दसेनास्तथा शूरा. पराक्रम्य यथातथम् ।
निराकुर्वन्ति ताः शत्रून्दूरं पापाः पलायिताः ॥ ३९ ॥
निजामोऽपि यदा नैव हितबुद्धिं समाशृणोत् ।
यदा च तत्प्रजाः सर्वास्तेन व्याकुलिता भृशम् ॥ ४० ॥

तदासावपि दण्डार्हः कृतो वै हिन्दमन्त्रिभिः ।
ज्ञापितश्च सभास्वेवं भाषणैर्विविधैस्तथा ॥ ४१ ॥
तदा तस्यानुकूल्याय पाकीयैरपि घोषितम् ।
स्वल्पापि पीडा चैतस्य देशेऽनर्थाञ्जनिष्यति ॥ ४२ ॥
मुस्लीमाः सर्वतो राष्ट्रे तेन संतापिता भृशम् ।
कोलाहलं प्रकुर्वाणा हन्युर्हिन्दून्सहस्रशः ॥ ४३ ॥
तस्मात्स्वातन्त्र्यमस्यैव मन्तव्य सर्वथा जनैः ।
यदस्य संमत राज्ये तत्स्वीकार्यं सुखेन च ॥ ४४ ॥
आंग्ला अपि निजामेन धनं दत्वा वशीकृताः ।
अस्यानुकूलं जल्पन्ति दूषयन्ति च मन्त्रिणः ॥ ४५ ॥
अन्यायोऽयं महांल्लोके यन्निजामः स्वतन्त्रितः ।
पदे पदे पीड्यतेऽसौ शासने हिन्दमन्त्रिभिः ॥ ४६ ॥
उदारोऽयं सदाचारश्चास्माकं हितकृत्सुहृत् ।
रक्षितव्यः सदास्माभिरापत्सु च सभासु च ॥ ४७ ॥
उत्तेजितोऽधिक चैतैर्जल्पनैरसकृत्तदा ।
निजामो न शृणोत्येषां हितवादाश्च मन्त्रिणाम् ॥ ४८ ॥
तदा सपदि तस्यापि दुष्कृतं तन्निरोधितम् ।
प्रेषिताः सर्वतो सेनाः प्रजानां शान्तिहेतवे ॥ ४९ ॥
ताभिर्निर्दालिता दुष्टा निजामोऽपि वशीकृतः ।
लोकानां सुखशान्त्यर्थं स्थापितं शासन दृढम् ॥ ५० ॥
सामाद्येवं समाश्रित्य दण्डं चापि यथोचितम् ।
जवाहरपटेलादिमन्त्रिणो जयमाप्नुवन् ॥ ५१ ॥
यथाकाशस्थितः सूर्यो मेघैराच्छिद्यतेऽसितैः ।
तमोव्याप्तश्च लोकोऽयं तेन व्याकुलितो भवेत् ॥ ५२ ॥
पश्चाद्वायुर्जवेनैतान्मेघानुद्धूय सर्वतः ।

सूर्यप्रकाशे यथात्र सुस्थितास्तत्करोति ह ॥ ५३ ॥
आवृतं सत्यमप्येवमनृतेनेह सत्पथम् ।
स्वतेजसा तज्ज्ञकांश्चिन्त्योतयेदचिरात्मना ॥ ५४ ॥
माहात्म्यं हि स्वराष्ट्रस्याप्येवं सत्यं प्रतिष्ठितम् ।
वर्धतेऽनुदिनं तेजोबलयुक्तं सुनिश्चितम् ॥ ५५ ॥

धृतराष्ट्र उवाच ।

गतो यद्यप्यसौ गान्धी तथापि तमनुव्रता ।
प्रचारयन्ति तन्मार्ग उदारा धैर्यशालिन ॥ ५६ ॥
तमनुस्मृत्य वर्तन्ते लोकानां हितकाम्यया ।
इति श्रुत्वापि सन्तोषो महान्मनसि जायते ॥ ५७ ॥

संजय उवाच ।

आङ्ग्लानामेव साम्राज्यं भारते सुस्थितं चिरात् ।
तत्स्वाभीप्सितं राजन्स्वदीयैर्यतितं तथा ॥ ५८ ॥
तथापि कालमाहात्म्यात्तैरपि महात्मनाम् ।
स्वातन्त्र्यं भारतं प्राप्तं खण्डान्कृत्वाप्यनेकश ॥ ५९ ॥
पाकिस्तानस्य निर्माणे नानाक्लेशपरंपरा ।
त्वदीयैरेव सर्वं तत्कृतं नान्यत्र संशय ॥ ६० ॥
अधुनापि वदन्त्येते साम्राज्यकृतनिश्चया ।
भारतेऽप्याङ्ग्लमाहात्म्यं त्वदीयाश्चापलादय ॥ ६१ ॥
अटलीमहाशास्त्वेतेऽप्युदारा अधिकारिण. ।
भारतस्य हितं युक्तास्तवेच्छा तैर्निराकृता ॥ ६२ ॥
अन्यत्रापि च राष्ट्रेषु लोकः स्वातन्त्र्यमिच्छति ।
जातस्तत्र च संघर्ष परकीये प्रशासके. ॥ ६३ ॥
पाकिस्तानप्रणेतापि जिना कालवशं गतः ।
हिन्दूनां पीडनायैव तदीयास्तु सदोद्यताः ॥ ६४ ॥

निःसार्यन्ते बलात्सर्वे हिन्दवस्त्राणमीप्सवः ।
हिन्दभूमिर्माश्रयन्ति पाकीयानां हिताय तत् ॥ ६५ ॥
तथापि हिन्ददेशेऽत्र नेतारः साम्यवादिनः ।
महात्मनो वचः स्मृत्वा यतन्ते न्यायतः सदा ॥ ६६ ॥
मुस्लीमोऽयमयं हिन्दुर्ब्राह्मणोऽप्यथवा कृषी ।
इति जातीयभेदोऽयं प्रभवेद्राष्ट्रघातकः ॥ ६७ ॥
तस्माज्जातीयतावादं निराकर्तुं समूलतः ।
यतन्ते राष्ट्रनेतारः सर्वलोकहिताय च ॥ ६८ ॥
एतेऽपि स्युर्यथाकालं लोकैरनुसृता नृप ।
उभयोरिह चैकात्म्ये कार्यसिद्धिः स्थिता ध्रुवा ॥ ६९ ॥
यत्र लोकाग्रणीर्धीरो लोकोऽपि त्यागशीलवान् ।
तत्र श्रीर्विजयोभूतिर्भवेद्राष्ट्रं समुन्नतम् ॥ ७० ॥

॥ इति श्रीगान्धीगीतायां सर्वमङ्गलयोगो नाम चतुर्विंशोऽध्यायः ॥ २

## ॥ समाप्तेयं गान्धीगीता ॥

# शुद्धिपत्रम् ।



| पृष्ठं | श्लोकः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | ६ ( उ. ) | ' वैदर्भीयोः ' | ' वैदर्भीयाः ' |
| ४ | १० ( पू. ) | ' °मुदिश्य ' | ' °मुद्दिश्य ' |
| ५ | २६ ( उ. ) | ' खिस्तीया ' | ' ख्रिस्तीया ' |
| ६ | ४१ ( पू ) | ' °रौषधीनां ' | ' °रोषधीनां ' |
| ,, | ४५ ( उ. ) | ' °तप्तराः ' | ' °तत्पराः ' |
| ८ | ३ ( उ. ) | ' °दौबल्यं ' | ' °दौर्बल्यं ' |
| ११ | ३६ ( पू. ) | ' °तनः अद्य ' | ' °तनश्चाद्य ' |
| १३ | १६ ( पू. ) | ' राष्ट्रीयाः ' | ' राष्ट्रियाः ' |
| १६ | ५६ ( पू. ) | ' खिस्ताश्च ' | ' ख्रिस्ताश्च ' |
| १७ | ३ ( पू. ) | ' सप्तथं ' | ' सत्पथं ' |
| ,, | ७ ( उ. ) | ' न्यस्थे° ' | ' न्यस्ये° ' |
| ,, | ८ ( पू. ) | ' राष्ट्रीया ' | ' राष्ट्रिया ' |
| १८ | १३ ( पू. ) | ' दयालत: ' | ' दयालव: ' |
| ,, | १९ ( पू ) | ' अनाश्रित्य ' | ' अनाश्रित्य ' |
| २० | २ ( पू. ) | ' सशस्त्र° ' | ' सशस्त्रा° ' |
| ,, | ४ ( उ. ) | ' आहिताय ' | ' अहिताय ' |
| २२ | ८ ( पू. ) | ' एवमेवे ' | ' एवमेते ' |
| २४ | ६ ( पू. ) | ' येव ' | ' येन ' |
| २६ | ३७ ( पू. ) | ' एवे ' | ' एवं ' |
| ३२ | १७ ( पू. ) | ' वैयर्थ्ये ' | ' वैयर्थ्ये ' |
| ३६ | ४० ( उ. ) | ' हितं ' | ' हि तं ' |

| | | | |
|---|---|---|---|
| ३७ | ४३ ( उ. ) | ' राष्ट्रीय ' | ' राष्ट्रिय ' |
| ३९ | १३ ( पू. ) | ' नियुक्तासु ' | ' नियुक्तास्तु ' |
| ४० | २७ ( पू. ) | ' सन्यस्त° ' | ' संन्यस्त° ' |
| ४२ | ५६ ( पू. ) | ' °च्कारं व्रतं ' | ' °च्कारव्रतं ' |
| ४३ | ६३ ( उ. ) | ' °दाग्ला° ' | ' °दांग्ला° ' |
| ,, | ६७ ( पू. ) | ' व्यापृतो जनः ' | ' व्यापृता जनाः ' |
| ४६ | ८ ( उ. ) | ' °श्वर भाव° ' | ' °श्वरभाव° ' |
| ,, | ,, ,, | ' °स्ति केषु ' | °स्तिकेषु |
| ५० | २ ( उ. ) | ' उपकृताः ' | ' उपकृता ' |
| ५३ | ४० ( पू. ) | ' अदासी कर्तुम् ' | ' अदासीकर्तुम् ' |
| ,, | ,, ,, | ' रञ्जन ' | ' रञ्जन ' |
| ६९ | ४५ ( पू. ) | ' व विभो ' | ' वै विभो ' |
| ७१ | ६९ ( पू. ) | ' संत्रोद्य- ' | ' संचोद्य- ' |
| ७२ | ३ ( पू. ) | ' समुदिश्य ' | ' समुद्दिश्य ' |
| ७३ | १३ ( पू. ) | ' सर्वेऽऽप्येते ' | ' सर्वेऽप्येते ' |
| ७४ | २९ ( उ. ) | ' °व भूमा° ' | ' °वन्भूमा° ' |
| ८० | १८ ( उ. ) | ' पराभवः ' | ' पराभवाः ' |
| ८८ | ३३ ( उ. ) | ' हिन्दू° ' | ' हिन्दु° ' |
| ९० | ५३ ( पू. ) | ' बहवः शंकाः ' | ' बह्वीः शंकाश्च ' |
| ९२ | ७८ ( उ. ) | ' एवैत° ' | ' चैवैत° ' |

# Notes.

1 This ध्यान serves also as a short introduction to the main work.

2 The Kaurava King of the original Bhagavadgita is taken here as a representative symbol of British Imperialism, while Sanjaya is the king's chairoteer and adviser.

3 The Viceroy and Governor General of India.

4 Session of the Indian National Congress at Lahore, Punjab, Pandit Jawaharlal Nehru being President in 1929, when a Resolution was passed declaring complete independence as the goal of India.

5 The famous Dandi March of 1930, led by Mahatma Gandhi; preparation of salt was also taken up as a movement in various other places

6 " Divide and Rule " policy, so successfully followed by all politicians

7 Invasion of Alexandar the Great, from North-West of India.

8 °फले असक्त. " Not attached to the results of his actions. "

9 पृत stands for सत्त्व, which is not intimidated by any torture, not even by death.

10 " Union is strength ".

11 Everything is done by the representatives of the people, but solely in the name of the king who individually is powerless in the actual administration

or direction of the subjects of national interest.

12 The machinery of rule in India, as developed by the English, left no scope for any individual bias.

13 Non-cooperation with Government, and bycott of English services by all Indians.

14 Bycott of English goods

15 The incident is given in the Vanaparvan of the Great Indian Epic, The Mahabharata: Pandavas bereft of their royal power, were living in exile in forest; where the Kaurava prince, having gone in the forest, under the pretext of inspecting the cowsheds, but wishing to humiliate the Pandavas, was attacked by the Gandharvas and made captive When the exiled brothers heard this they released him from captivity, showing thereby, that in times of difficulty they were one.

16 Eldest Pandava brother, Dharmaraja.

17 Legislative Assemblies were established in different provinces, where the socalled representatives of the people, sat and passed resolutions, but the Governor had supreme powers, and these resolutions were often of no practical use

18 Lord Curzon, Viceroy and Governor General of India, was the first to bring about the partition of Bengal, which caused great commotion in the country

19 Queen Victoria's proclamation, when the ruling powers of India, were taken over from the East India Company.

20 The socalled Anarchists of Bengal.

21 Session of the Indian National Congress, at Calcutta, where under the presidentship of Dadabhoy Nowroji a resolution was passed, declaring "Swarajya"—Homerule— as the goal of the National movement, accepting bycott of foreign goods, as one of the means to that end.

22 These were the Liberals, who stood for cooperation with Government, relying upon the good will of the English

23 The Responsivists, who, while cooperating with the Government, where the good of the country could be achieved thereby, showed readiness to oppose the Government, where necessary from viewpoint of National good.

24 These relied upon their own efforts, and subsequently developed into non cooperators.

25 Killing of the thousands of innocent Indians in Jalianwalla, Punjab, where the people were called to attend a meeting, and shot down by English soldiers under Dyar.

26 Rabindranath Tagore of Bengal, who won worldwide fame as poet

27 Jagadishchandra Bose, the famous scientist of India

28 Even those, who, with good motives, worked, but failed, deserve praise "Not failure, but low aim is crime."



29 Lala Lajpat Rai, Lion of Punjab.

30 Pandit Madan Mohan Malaviya of United Provinces.

31 Father and son, Pandit Motilal and Javaharlal Nehru, of whom the son, leads the destinies of the Nation, at present

32 Swami Sraddhanand, who was shot dead by a Muslim fanatic, in Delhi.

33 Surendranath Banerji, called the " uncrowned ruler of Bengal. "

34 Babu Motilal Ghose, of the Amrit Bazar Patrika, Calcutta.

35 Barrister C. R. Das.

36 Subhashchandra Bose, and Sen Gupta.

37 Yogi Shri Aravind, now at Pondicherry.

38 From the Late Sir Vijaya Raghavacharya down to C Rajagopalachariar, the present Governor General of India. There are, of course, many patriots other than the Acharyas of the South; the present is only an indication.

39 Lokamanya Bal Gangadhar Tilak

40 The Hon Mr. Gopal Krishna Gokhale, founder of the Servants of India Society.

41 The Rt Hon V. S. Shrinivas Shastri, president of the above S I Society.

42 For some time, the trinity consisting of ( 1 ) Lal ( Lajpatrai ), ( 2 ) Bal ( Lokamanya Tilak ) and ( 3 ) Pal ( Bipinchandra ), led the Indian Nation.

43 Round Table Conference, held in England in 1931, where Indian leaders of different political parties were invited to discuss the new constitution of the socalled "Svaraj" No agreement could be arrived at after long and numerous meetings, and, at last, "Communal Award" was graciously granted to the Indian Nation, by Mr. Macdonald's Government, in 1932.

44 Mahatma's fast, which brought about the Poona Pact, by which the depressed classes joined hands with the National Congress, on 26th September 1932.

45 Congress Session which met at Allahabad.

46 The Muslim League, which functioned all over India, in the exclusive interests of the Muslims. It never acknowledged Congress as the representative of the whole of India and in spite of Mahatma Gandhi's efforts, always stood for opposing the proposals for a united India.

47 The constitution of 1935, which provided for weightage to minorities, i. e the Muslims, so that where they were in a majority they could easily capture the Government of the Provinces, while in others, where they were in minority, special additional seats were given to them, the result being that muslims became powerful in all the provinces of India.

48 The second world war, which subsequently engaged almost all the Nations of the world.

49 Sanskritised form for "Germans"

50 "Russia" in friendship with the Germans, attacked Poland, and divided the subjugated nation among themselves. This served as the cause for the English to declare war against Germany.

51 Congress ministries resigned in a body, as a protest against the Viceroy's declaration of war, without consulting them.

52 Sir Stafford Cripps was deputed to India, in March 1942, to discuss the situation with Indian leaders. Britain's offer was more in terms of the future than of the present Gandhiji called it a 'Post-dated cheque' and Cripps had to return without securing cooperation of India's leaders.

53 "Quit India" movement started by Gandhiji; he declared 'Let the British leave India, they need not worry about the disturbances in the country.'

54 A mass meeting was held in Bombay on the night of 8th August 1942, where Gandhiji proclaimed his formula "do or die," and immediately, leaders all over India, were arrested, this was followed by a terrific suppression by the Government.

55 While kept under arrest in Agakhan palace, near Poona, Gandhiji suffered a terrible loss, the death of his wife, Kasturba.

56 The 'Atom bomb' which brought the war to a deplorable end

57 'Āmraka' a sanskritised form for Americans.

58 'Direct action' of the Muslims, which started with killing of Hindus in Bengal, and the trouble took a serious form in other places, also.

59 Lord Wavell was called back after these disterbances, and Mount Batton appointed Viceroy and Governor General of India

60 The Nehru report, to which all Indian leaders including Jinah, had agreed.

61 Pathans of the North-west Frontier attacked Kashmir, and were instigated and aided by the leaders of Pakistan.

62 The Nizam of Hyderabad, in the Deccan.

63 The United Nations Organization, having its offices at Lake Success, in America, was approached on this point, the Pakistan representatives, having now admitted their share in Kashmir aggression, the matter is still undecided, though an Armistice has recently been declared.

64 UNO Commission visited India to see the actual state of things and discuss the desirability of a compromise.

65 Leading members of the State Congress

66 Communists taking their inspiration from Russia.

67 Struggle for independence in Indonesia, Indo-china etc.

68 Making it impossible for the Hindus to stay in Eastern Pakistan, the recent shifting of lacs of

Hindus to West Bengal, has added to the difficulties of the Indian Government.

69 Being originally intended to be an imitation of the Bhagavadgita, this Gita also closed with 18th Adhyaya; but the manuscript lay with the author, for so many years, without its having any body to publish it. So that when, sometime back, the Hon. Shri Mavalankar read the manuscript, he suggested that the text be brought upto-date, including all the important developments in the National struggle for independence; and the author readily accepted the kind suggestion, adding six more Adhyayas. Thus bringing the total to 24.

| No. | Title | Rs. As. |
|---|---|---|
| 41 | वैजयन्तिकोश – G Oppert | |
| 42 | Democratic Hinduism | 2-8 |
| 43 | अमरकोश क्षीरस्वामीटीकायुत with marginal English meanings, Indexes etc- डॉ शर्मा & N. G सरदेसाई | 7-8 |
| 44 | शाश्वतकोश – N N. कुलकर्णी | 2-8 |
| 45 | शब्दरूपावलि | 0-6 |
| 46 | Systemes of Sk-Grammar | |
| 47 | Sk-Inscriptions- डिस्कळकर | |
| 48 | बाणभट्टविरचिता कादम्बरीमूलमात्र ed. P. L वैद्य accg. to Peterson's pagination | 6-4 |
| | –कथामुख only, with Notes, Tr | 3-12 |
| 49 | काव्यप्रकाश X—डॉ शर्मा | |
| 50 | भामिनीविलास– H D. शर्मा | 2-8 |
| 51 | काव्यप्रकाश III उल्लास ,, | 0-12 |
| 52 | जातकसंग्रह– N. V. तुंगार | 1-4 |
| 53 | Ancient Karnataka by Dr - Saletore ( Tuluvās ) | 11-4 |
| 54 | भासनाटकचक्र मूलमात्रं Texts of 13 भास's Plays—C R देवधर | 15-0 |
| 55 | पाली सद्दरूपावली | 0-4 |
| 56 | Picturesque Orientālia by Dr. R N Sardesai Album of 103 Photos of Western Indologists. | 11-4 |
| 57 | काव्यप्रकाश I&II –डॉ शर्मा | 1-12 |
| 58 | न्यायसूत्र ( गौतम ) वात्स्यायनभाष्य खद्योतटीका डॉ G झा. | 6-4 |
| 59 | —Full Eng Trans- ,, ,, | 10-0 |
| 60 | कवींद्रचद्रोदय–डॉ शर्मा | 2-8 |
| 61 | प्रतिज्ञायौगधरायण–देवधर | 1-12 |
| 62 | न्यायसूत्रपाठ | 0-8 |
| 63 | गंगालहरी सार्थ (मराठी ) | 1-0 |
| 64 | Brahmanical Asceticism ( सू-चीत ) Thesis- डा शर्मा | 2-8 |
| 65 | चारुदत्त– C. R. देवधर | 2-8 |
| 66 | गंगालहरी समश्लोकी | 0-4 |
| 67 | ––मूलमात्र | 0-2 |
| 68 | महिम्नस्तोत्र सार्थ ( मराठी ) | 1-0 |
| 69 | ––मूलमात्रम् | 0-2 |
| 70 | ब्रह्मसूत्रचतु सूत्रि–डॉ. शर्मा | 2-8 |
| 71 | चाणक्यनीतिसार–सार्थ | 0-8 |
| 72 | ऊरुभङ्गम्–C. R देवधर | 1-4 |
| 73 | पाली धातरूपावलि –तुंगार | 0-8 |
| 74 | Ancient India & S I Hist & culture —Dr. S K अय्यंगार 2 Vols. | 22-8 |
| 75 | Fertschrift ( Commn-vol ) Prof- P. V काणे | 17-8 |
| 76 | Hist of Guptas- डॉ. R. N. दाडेकर | 5-8 |
| 77 | अलकाररत्नाकर C R देवधर | 3-8 |
| 78 | छांदोग्योपनिषद् Eng Tr. of Text & शांकरभाष्य by G झा. | 7-8 |
| 79 | मराठी गाइड to Pali Manual | 1-0 |
| 80 | गुजराति— —— | 1-0 |
| 81 | हिंदि ——— | 1-0 |
| 82 | इंग्लिश——— | 1-0 |
| 83 | ऋजुलघ्वी–मालतीमाधवकथा | 2-8 |
| 84 | मयूरसंदेश– डॉ C K राजा | 3-8 |
| 85 | सबध निर्णय of गोपालन्यायपञ्चानन | 1-4 |
| 86 | बिल्हण's चौरपञ्चाशिका–ताडपत्रीकर | 2-8 |
| 87 | उवासगदसाओ–प्रो N A. गोरे | |
| 88 | गान्धीगीता–ताडपत्रीकर | 3-12 |